# श्रीगङ्गातत्त्वसन्दर्भः।

श्रुति-स्मृति-पुराणप्रभृति-प्रमाण-कदम्बविभूषितः।

श्रीवृन्दावननिवासि-श्रीनन्दकिशोरशास्त्रिसुतेन

पण्डित दुर्गादत्तशर्म्मसामवेदिना

विरचितः।

पण्डित श्रीदेवीसहायशर्म्मणा संशोधितः।

अडोरा ख्यातियुत-गिरिधारिलालपुत्रेण

बालमुकुन्दवर्म्मणा मुद्रापयित्वा प्रकाशितः।

कलिकातानगरे

७५ नं० तुलापटीस्थभवने

रामनारायणपालेन

नारायणयन्त्रे

मुद्रितः।

# श्रीगङ्गातत्त्वसन्दर्भः।

श्रीराधागोपालगुरुचरणाब्जेभ्यो नमः।

प्रणम्य श्रीमतीं गङ्गां कल्पान्तकलिगामिनीम्। श्रीगङ्गातत्त्वसन्दर्भः क्रियते भ्रान्तिनुत्तये ॥ १ ॥ अथ च, कलेर्दशसहस्रान्ते विष्णुस्त्यक्ष्यति मेदिनीम्। तदर्द्धं जाह्नवीतोयं तदर्द्धं ग्रामदेवता ॥ इति सनत्कुमारसंहितास्थस्यास्य श्लोकस्य सम्बन्धतात्पर्य्यानभिज्ञाः केचनवाला इतिवदन्ति अस्मिन्नेव कलौ पञ्चसहस्राब्दमनु श्रीगङ्गा स्वधामयास्यतीति तदसङ्गतमेव। अत्र श्लोकेऽष्टाविंशतितमसंख्याककलिकथनाभावात् तथाचग्रामदेवानामपि प्रत्यक्षमेवफलदत्वेनाधुनागमनविरोधात्। अपि च प्रत्येककलिपरत्वमस्य वाक्यस्य यदि स्यात्तर्हि भगीरथादनुजातेषु कलिषु यात्राऽऽपत्तित्वेऽप्यद्यविद्यमानत्वात् कल्पान्तकलिज्ञापकं वाक्यमेतत् तदुक्तं बृहद्विष्णुपुराणे—पृथिवी गङ्गया हीनाभविष्यत्यन्तिमे कलौ। तदैव विष्णुस्त्यक्ष्यतिमेदिनीं नरपुंगवेति अतोऽस्मिन् कलौ गङ्गायाः स्वधामगमनं नानुसन्धेयम् वेदस्याप्यत्र सदा स्थितिज्ञापकत्वात् अत्र ऋग्वेदसप्तमाष्टकद्वितीयेऽध्यायेऽष्टादशवर्गानन्तरं विंशतिऋगात्मकमिदं परिशिष्टम्। यत्र गङ्गा च यमुना च यत्र प्राची सरस्वती यत्र सोमेश्वरो देवस्तत्र मामसृतं कृधीन्द्रायेन्दोपरिस्रव इति। एतदर्थश्च। यत्र यस्मिन् स्थले गङ्गा च अस्ति यमुना च अस्ति प्राची पूर्ववाहिनी सरस्वती च अस्ति यत्र गङ्गायमुनासरस्वतीसङ्गमोऽस्तीतिभावः तत्र त्वं माम् अमृतं कृधि कुरु हे इन्दो इन्द्राय परिस्रव सोमं देहीति अत्रवर्त्तमानकालक्रियासम्बन्धोऽस्ति अतोऽष्टाविंशतितमेऽस्मिन् कलौ गङ्गाप्रयाणाङ्गीकारे पञ्चसहस्राब्दमन्वपि वेदवाक्यमेतावदेव स्थास्यति तर्हि कथं सर्वदा सत्यस्य वेदस्य सत्यत्वं भविष्यति किन्तु गतवस्तुनो वर्त्तमानत्ववर्णनेन मिथ्यावादित्वं लोके वेदेऽपि प्रसिद्धमेवास्ति अतस्तद्वेदेऽपि भविष्यत्यतोऽस्मिन् कलौ गङ्गाप्रयाणकथनं वेदविरुद्धमेतत् केवलं भ्रान्तिजनितसम्प्रदायपरम्परया प्रसृत-

मस्ति तत्कथमादरणीयं स्यात् किञ्च तत्र माम् अमृतं क्रधि अमरं कुर्वित्यनेनैव गङ्गायमुनासङ्गमस्थलस्याप्यमरत्वं सूच्यते * तथाऽच मन्त्रे गङ्गा च इति चकारग्रहणं समुच्चयार्थं इति बोध्यं तथैवापरा च ऋग्वेदीयपरिशिष्टश्रुतिः अष्टमाष्टके तृतीयेऽध्याये षड्वर्गानन्तरमियमेका ऋक् यथा सितासिते सरिते यत्र सङ्गथे तत्राप्लुतासोदिवमुत्प्लवन्ति ये वै तन्वं विसृजन्ति धीरास्ते जनासोऽमृतं भजन्ते इति । एतदर्थश्च । यत्र स्थले सितासिते सरिते सङ्गते सिता शुक्लवर्णा गङ्गा असिता कृष्णवर्णा यमुना उभे नद्यौ मिलिते तत्र तयोः सङ्गमे आप्लुतासः कृतस्नानाः जनाः दिवं स्वर्गं उत्प्लवन्ति उत्पतन्ति ये च धीराः तन्वं तनुं विसृजन्ति तेजनासः जनाः वैनिश्चयेनामृतं मोक्षं भजन्ते प्राप्नुवन्तीति अत्रापि उत्प्लवन्ति विसृजन्ति भजन्ते इति वर्त्तमानकालक्रियाकथनेन गङ्गायमुनयोः सङ्गमस्य नित्येन भगवता वेदेन नित्यत्वं प्रतिपाद्यतेऽतस्तावदेव श्रीगङ्गायाः कल्पान्तं भुवि स्थितिविषये वेद एव प्रमाणम् ननु वेदे वर्त्तमानपरोक्षादिकालस्य क्वचित् क्रियासुनियमो नास्ति तद्वदत्राप्यनियमोऽस्तु इति चेन्न ॥ यद्दिडाप्रदेशिनी दिवोगात्रिपथा सरिदिति श्रुतेः तथा वामनपुराणे मानसिकस्नानवर्णने ॥ इड़ा भागीरथी गङ्गा पिङ्गला यमुनानदी । तयोर्मध्यगता नाड़ी सुषुम्णाख्या सरस्वती ॥ १४ ॥ इति श्रुत्यादिप्रतिपादितविराजः पुंसो मुख्यनाड़ीत्वेन गङ्गाया ग्रहणात् शताध्यायि प्रयागमाहात्म्येऽपिगङ्गास्तवे । त्वंमोक्षलक्ष्मीस्त्वमसि प्रभा च त्वंब्रह्मनाड़ी वरनाड़िकासि । त्वंब्रह्ममायासि विचित्रगासि त्वंब्रह्मरूपासि नमोनमस्ते इति यावद्विराजः स्थितिस्तावद्गङ्गास्थितिः शरीरस्थितौ नाड़ीनामपि तत्र स्थितत्वात् अत्र श्रुतौ वर्त्तमानकालक्रियानियमोऽवाधित एव तेन गङ्गास्थितिरप्यवाधिता तथा चैवं श्रीभागवतस्य मतमपि वर्त्तमानकालक्रियया प्रदृश्यते । यथा । पञ्चमस्कन्धे यत्रहवाववीरव्रत औत्तानपादिः परमभागवतोऽस्मत्कुलदेवताचरणारविन्दोदकमिति या मनुसवनसुत्कृष्यमाणभगवद्भक्तियोगेन संक्लिद्यमानान्तर्हृदय औत्कण्ठ्यविवशा मीलितलोचनयुगलकुड्मल-विगलितामलवाष्पकलयाभिव्यज्यमान-रोमपुलककुलकोऽधुनापि परमादरेण शिरसा विभर्त्ति ॥ अन्यदपितत्रैव । मुमुक्षव इव

* आधाराऽमरत्वे एवाधारे याऽमरत्वं घटते ।

सबहुमानमद्यापि जटाजूटैरुद्वहन्ति ॥ तथा चैवम् ॥ ततोऽनेककोटिसहस्र-विमानानीकसंकुलदेवयानेनावतरन्तीन्दुमण्डलमाप्लाव्यब्रह्मसदने निपतति तत्र चतुर्द्धा भिद्यमाना चतुर्भिर्नामभिर्नदनदीपतिमेवाभिनिविशति इत्यादि एवं बहुवाक्यवृन्दैः कल्पान्तकलिपर्य्यन्तमत्र श्रीगङ्गास्थितौ नास्ति सन्देहावसरः कल्पान्तकलिं विना श्रीगङ्गाप्रयाणेऽन्यकलिसंख्याकत्वकप्रमाणाऽभावात् बृहद्विष्णुपुराणादिषु स्पष्टोक्तत्वाच्च तथा श्रीगङ्गाचरणैरपि भगीरथं प्रति कृतप्रतिज्ञत्वाच्च तदुक्तं प्रायश्चित्ततत्त्वे यावद्धरण्यां तुलसीप्रपूज्यते गुरुर्नभस्यो दिवि कल्पपादपः। यावत्समुद्रे वड़वानलश्च वमामिराजं स्ववचक्रलाति इति तथा सम्मोहनतन्त्रे "संसारसागरोत्तीर्णकारणाय नृणां सदा। श्रीगङ्गा-द्रवरूपेण त्रैलोक्यं व्याप्यतिष्ठति" ॥ १ ॥ तथा भारतेऽपि दानधर्मे युधिष्ठिरं प्रति भीष्मवाक्यम्। तत्स्थानकंत्राह्मरमभोप्समानैर्गङ्गासदैवात्मवशैरुपास्या इति अत्रोभयोरपि वाक्ययोः सदा शब्दः कल्पान्तकलिपर्य्यन्तस्थितिद्योतकः श्रीवाल्मीकीयरामायणेऽपि भगीरथं प्रति विरञ्चिवाक्यं सागरस्य जलं लोके यावत्स्थास्यति पार्थिव। सगरस्यात्मजास्तावत् स्वर्गे स्थास्यन्ति देव-वदिति। अत्र सागरस्थं गङ्गाजलं ज्ञेयम् अगस्त्यकृतपानमनुश्रीगङ्गयैव कृत तत्पूर्त्तित्वात् अधुनापि तथा तस्या एव तत्पूर्त्तिकर्त्तृत्वाच्च अन्यथा चेद्वड़-वानलेन क्रियमाणोऽब्धिर्न्यूनतां यायात्। उक्तञ्चब्रह्माण्डपुराणे—"त्रिवि-क्रमपदोद्भूता ब्रह्माण्डशिखरोद्भवा। परा विष्णुपदीगङ्गा समुद्राऽऽपूर्त्ति-कारिणी" इति। भारते तु। कुम्भजेन कृतसमुद्रपानमनुसागरस्य पूर्त्तिः श्रीगङ्गया कृता क्रियते चेत्याख्यानं विस्तरेणोक्तम् अतएव कल्पान्तकल्यवधि-कैव नरदृष्ट्या * गङ्गा स्थितिरिति निश्चीयते। किञ्च। अस्यैव कलेः पूर्वसन्ध्यांश-पञ्चसहस्राब्दमनुगङ्गाप्रयाणाङ्गीकारे सर्वैरेव श्रुतिस्मृतिपुराणादिभिः कलौ गङ्गाया एव चतुर्वर्गप्रदत्वं प्रतिपाद्यते तत्कथं सङ्गतं स्यादतो नास्यत्र कलौ तथान्येषु च प्रयाणशङ्कापीति बोध्यम्। अथ कलौ श्रीभागीरथ्या एव चतु-र्वर्गप्रदत्ववाक्यानि प्रलिख्यन्ते ॥ तावत्तु शिवपुराणे, नास्ति गङ्गासमं तीर्थं कलिकल्मषनाशनमिति॥ स्कान्देऽप्ययं श्लोकः अत्र च कलिकल्मषनाश-कत्वं प्रयाणे सति कथं सङ्गतं स्यात् अतोऽत्र कलौ न प्रयाणशङ्केति पुनः

* वास्तवतो विराट्पुरुषनाड़ीरूपाया सदा स्थितिः नरदृष्टिमात्रकथनं साधु।

पुनः प्रदर्श्यते अत्र श्लोके कलिशब्देनैव प्रयाणाभावः कलेर्दशसहस्रान्ते इति वाक्यस्यापि कल्पान्तस्थितिपरत्वञ्च सूच्यते एवमग्रेऽपि लिख्यमानवाक्येषु बोध्यम्। तथा नारदीये। कलौ तु परमब्रह्मप्राप्तये सद्वरं नृणाम्। गङ्गाजलस्य सेवा तु महोपायो महर्षय इति। तथा स्कान्दे काशीखण्डे सप्तविंशेऽध्याये। कृते तु सर्वतीर्थानि त्रेतायां पुष्करं परम्। द्वापरे तु कुरुक्षेत्रं कलौ गङ्गैव केवलम् ॥ १ ॥ ध्यानं कृते मोक्षहेतुस्त्रेतायां तच्च वै तपः। द्वापरे तु द्वयं यज्ञाः कलौ गङ्गैव केवलम् ॥ २ ॥ कलौ कलुषचित्तानां परद्रव्यरतात्मनाम्। विधिहीनक्रियाणाञ्च गतिर्गङ्गां विना न हि ॥ ३ ॥ तत्रैव विष्णुं प्रति शिववाक्यं, यज्ञदानतपोहोमजपाः सनियमा यमाः। गङ्गासेवासहस्रांशं न लभन्ते कलौ हरे ॥ ४ ॥ अन्यच्च ॥ वृथा कुलं वृथा विद्या वृथा यज्ञा वृथा तपः। वृथा दानादि तस्येह कलौ गङ्गां न यो भजेत् ॥ ५ ॥ मत्स्यपुराणे— ब्रह्मादिदेवलोकानां मुक्तेश्च प्राप्तये नृणाम्। गङ्गा च परमा हेतुः कलिकाले विशेषतः इति ॥ कौर्मेऽपि, कलौ गङ्गैव गङ्गैव कलौ गङ्गैव केवलम्। कः कलौ मुक्तिमाप्नोति गङ्गासेवां विना नरः ॥ १ ॥ भारतेऽपि पिण्डप्रकरणे, गङ्गायाञ्च गयायाञ्च पिण्डदानं समं मतम्। विशेषतः कलियुगे गङ्गापिण्डं प्रशस्यते इति ॥ किञ्च। सर्वेषां तीर्थानामपि वासः श्रीगङ्गायां कलाविति ब्रह्माण्डपुराणे, कलौ तु सर्वतीर्थानि स्वं स्वं वीर्य्यं स्वभावतः। गङ्गायां प्रतिमुञ्चन्ति सा तु देवी न कुत्रचित् ॥ १ ॥ तथा भविष्योत्तरे तिस्रः कोट्योऽर्द्धकोटिश्च तीर्थानां वायुरब्रवीत्। सर्वदा कलिकाले तु गङ्गायां नात्र संशय इति ॥ अथ स्कान्दे दर्शनमाहात्म्यम्। विधूतपापा ये मर्त्त्याः परब्रह्मस्वरूपिणीम्। सहस्रसूर्य्यप्रतिमां गङ्गां पश्यन्ति ते कलौ ॥ १ ॥ ब्रह्माण्डे तु विशेष उक्तः, दृष्टा जन्मकृतं पापं स्पृष्टा जन्मशतस्य च। स्नाता जन्मसहस्राणां हन्ति गङ्गा कलौ युगे इति ॥ अन्यच्च स्कान्दे, सिद्धयः सिद्धलिङ्गानि स्पर्शलिङ्गान्यनेकशः। प्रासादरत्नखचिताश्चिन्तामणिगणास्तथा ॥ १ ॥ गङ्गाजलान्तस्तिष्ठन्ति कलिकल्मषभीतितः। अत एव हि संसेव्या कलौ गङ्गेष्टसिद्धिदेति ॥ तथा भविष्येऽपि, स्पर्शलिङ्गानि दिव्यानि तथा दिव्यौषधानि च। महारत्नानि यान्येव प्रदानानि बहून्यपि ॥ १ ॥ दिव्यरत्नान्यनेकानि चिन्तामणिगणस्तथा।

गङ्गाजलान्तस्तिष्ठन्ति निगूढानि सहस्रशः ॥ अतएव सुसंसेव्या कलौ गङ्गैव केवलम् इति ॥ किं बहुना उक्तवाक्येषु नैकमपि वाक्यमयथा भवितुमर्हतीत्यतोऽत्र कलौ गङ्गायात्रोत्पादका अज्ञानिन एव अविचारित्वात् तेषामविचारित्वं त्वग्रिमप्रकरणे स्पष्टी भविष्यति किञ्च, श्रीगङ्गायाः भगवद्विभूतित्वेनापि नास्ति कल्पान्तस्थितौ सन्देह इति प्रतिपाद्यते। गीतायाम्, अश्वत्थश्चास्मि वृक्षाणां औषधीनामहं यवः। इति प्रभृति भगवदुक्ततद्विभूतीनां यत्र यत्र पूर्वं तेनैव तन्निवासः कल्पितस्तत्र तत्रैव लोकक्षेमहेतवे कल्पान्तं स्थितिर्निःसन्देहैव यथा उच्चैःश्रवो वज्रेन्द्रैरावतादीनां स्वर्गे वासः, अश्वत्थादीनां भुवि, अनन्तादीनां पाताले, तथा स्रोतसामस्मि जाह्नवीति भगवदुक्तविभूतित्वे श्रीगङ्गाया अपि त्रैलोक्ये वासः, क्षितौ तारयते मर्त्यान् नागांस्तारयते ह्यधः। दिवि तारयतेऽमर्त्यांस्तेन त्रिपथगा स्मृता ॥ १ ॥ इति स्कान्दोक्त्या तस्यास्त्रिपथगामित्वात् स्रोतसामिति पदसाहचर्य्यत्वाच्चेति किञ्च, बदरिकाश्रमाद्यारभ्याऽऽसमुद्रान्तं केवलं गङ्गैकाश्रयाणामेव मायापुरीप्रान्तप्रभृतितीर्थानां माहात्म्येषु कलिकल्मषनाशकत्वं नित्यत्वं च तेषामुक्तमेव तत्तन्माहात्म्यप्रकरणेषु अत्र ग्रन्थभूयस्त्वभयात्तत्तद्वाक्यानि नो लिख्यन्ते तर्हि गङ्गायात्राङ्गीकारेऽत्र कलौ तेषां नित्यत्वे कलिपापनाशकत्वे च मिथ्यात्वाऽऽपतिस्तथा पुराणादीनां मिथ्यावादित्वं च स्यात् अतो गङ्गाप्रयाणकथनमप्यसंगतमेव पुराणादीनां भगवद्रूपत्वेन सत्यत्वात् तथा कलेरन्ते भावि भगवत्कल्किचरणैः श्रीगङ्गातटे कृत तपःसमाधित्वात् तत्रैव मुनिभिः कृत गङ्गास्तवनाच्च व्यासोक्तकल्किपुराणे तृतीयेऽंशे ऊनविंशेऽध्याये विंशादिश्लोकेषु स्पष्टमेवैतत् यथा हिमालयं मुनिगणैराकीर्णं जाह्नवीजलैः। परिपूर्णं देवगणैः सेवितं मनसः प्रियम् ॥ २० ॥ गत्वा विष्णुः सुरगणैस्तत्राऽऽस चतुर्भुजः। उषित्वा जाह्नवीतीरे सस्माराऽऽत्मानमात्मना ॥२१॥ इत्यादि अथान्यदपि तत्रैव। गङ्गां स्तुत्वा समायाता मुनयः कल्किसन्निधावित्यादि। किं बहुना वेदप्रभृतिप्रमाणवृन्देन कल्पान्त कलिं विना सर्वथा श्रीगङ्गायाः स्वधामगमनस्याऽभाव इति दिक्।

इति श्रीगङ्गातत्त्वसन्दर्भे श्रीनन्दकिशोरशास्त्रि-सुत-दुर्गादत्तकृते
प्रथमप्रकरणं समाप्तम्।

नीराकारं निर्विकारं नौमिब्रह्मनिरन्तरम् । येनार्पितो भ्रमः पापि धीषु गूढार्थवाग्गणे: ॥ १ ॥ अथात्र शास्त्रवाक्येषु विरोधः क्व च दृश्यते । सोप्यऽस्यतेऽद्य पौत्रेण रामदत्तस्य शास्त्रिणः ॥ २ ॥ अधुना कलेर्दशसहस्रान्ते इति श्लोकस्यार्थमेव वस्तुतोऽन्तिमकलिपरं दर्शयितुं तावद्ब्रह्मणोदिनप्रमितिरुच्यते । श्रीभगवद्गीतायां, सहस्रयुगपर्यन्त महर्यद्ब्रह्मणो विदुः । रात्रिं युगसहस्रान्तान्तेऽहोरात्रविदो जना इति ॥ अत्र युगशब्देन युगचतुष्टयसहस्रपर्य्यावर्त्ती बोध्यः । तथा च ब्रह्मणो दिनस्यैव कल्पसंज्ञा यत्र चतुर्दशमन्वन्तराणि भवन्तीत्यपि ज्ञेयम् । उक्तञ्च श्रीमद्भागवतेऽष्टमस्कन्धे एतत्कल्पविकल्पस्य प्रमाणं परिकीर्त्तितम् । यत्र मन्वन्तराण्याहुश्चतुर्दशपुराविदः ॥ ११ ॥ इति तत्रैव द्वादशस्कन्धेऽपि, चतुर्युगसहस्रन्तु ब्रह्मणोदिनमुच्यते । सकल्पो यत्र मनवश्चतुर्दशविशाम्पते ॥ २ ॥ तदन्ते प्रलयस्तावान् ब्राह्मी रात्रिरुदाहृता । त्रयो लोका इमे यत्र कल्पन्ते प्रलयाय वै ॥ ३ ॥ एष नैमित्तिकः प्रोक्तः प्रलयो यत्र विश्वसृक् । शेतेऽनन्तासने विश्वमात्मसात् कृत्य चात्मभूः ॥ ४ ॥ इति वाक्यैरिदं निष्पन्नं भवति प्रथमकृतयुगादौ लोकत्रयरचना भवति तथा चान्तिमे कलौ लोकत्रयप्रलयः तदैव तत्र विष्णु-गङ्गाग्रामदेवानां भूत्यागः सम्भवतीति पुराणेषु सर्वत्रैव स्फुटमस्ति तदत्र विस्तरभयान्न प्रदर्श्यते। तस्मिन्नेव काले कलेर्दशसहस्रान्ते इति श्लोकार्थः संघटते पुरोडाशं चतुर्द्धा करोतीत्यस्याग्नेय उपसंहारवत् तदन्ते प्रलयस्तावानिति नियमाच्च अतएव श्लोकार्थस्त्वप्ययमेव बुध्यते । यथा दशसंख्याने इति धातोरच्प्रत्यये कृते दश इति सिध्यति तेन दशशब्दवाच्येन संख्यानेन गणनया सहस्रस्य अन्तो यत्र अत्र मध्यमपदलोपीसमासः । कलियुगस्य प्रथमत आरभ्य गणनया सहस्रपर्य्यावर्त्तस्य अन्तःसमाप्तिर्यत्र तस्मिन् काले सति यदा योऽन्तःप्रविश्यभूतानि भूतैरत्त्यखिलाश्रय इति भागवततृतीयस्कन्धोक्तेः दशति दंष्ट्रयादारयति अत्ति सर्वभूतानीति दशः कालः दंशदशने इति धातोः मूलविभुजादिभ्य उपसंख्यानमिति कः प्रत्ययः सहस्रस्य सहस्रपर्य्यावर्त्तस्य अन्तो यत्र दशश्चासौ सहस्रान् तत्र दशसहस्रांतः कलेः कलियुगस्य सर्वक्षयकारकसहस्रपर्य्यावर्त्तसमाप्तिविधायके काले जाते सतीति भावः अन्तिमे कलाविति फलितोऽर्थः यदा तत्र स्थले सूर्य्यानक-

संवादश्रवणात् रविः स्वसारथिनं तं संबोधयति हे दश ! हे पक्षिन् ! दशः पक्षीविहङ्गम इति हलायुधकोशात् कलेः सहस्रान्ते सति तदा विष्णुः मेदिनीं त्यक्ष्यति तदर्द्धं विष्णुत्यागकालस्य अर्द्धं कालं प्राप्य प्रणष्टे द्वादशादित्ये प्रलये समुपस्थिते। तदा वै प्रलयं यान्तु गङ्गाद्याश्च सरिद्वरा इति पुराणान्तरवाक्यात् तस्मिन्नेव कलौ इयत्कालप्रमाणं प्राप्य विष्णुर्भुवं त्यक्ष्यति तत्कालस्यार्द्धप्रमाणं प्राप्य प्रथमतः श्रीगङ्गा मेदिनीं त्यक्ष्यति तदर्द्धं इयत्काले गङ्गाभुवं त्यक्ष्यति तत्कालस्यार्द्धप्रमाणं प्राप्य पूर्वमेव ग्रामदेवताः पृथ्वीं त्यक्ष्यन्ति अन्तिमे कलौ प्रथमतो ग्रामदेवाः भुवं त्यक्त्वा स्वगम्यस्थानं यास्यन्ति तदनन्तरं श्रीजाह्नवी यास्यति तदनन्तरं विष्णुरिति फलितं तात्पर्य्यम्॥ नन्वत्र विष्णोः वाराहाद्यवतारमूर्त्तिषु कावनमूर्त्तिः वा स्वयमेवैतद्ब्रह्माण्डाधिनाथो गृह्यते तथा च पयस्विनी-मन्दाकिनी-सरय्वादि-रूपेण गंगाबहुत्वश्रवणात् का गंगा तथा के च ग्रामदेवा इति॥ अत्र क्रमेणोच्यते अत्रावताराणामभावादग्रहणम् अतएव विशप्रवेशने इति धातोः विष्णुरिति सिद्धौ सत्यां यस्य सत्तया जगत्स्थितं सविष्णुर्ज्ञेयः। यस्माद्विष्टमिदं सर्वं तस्य शक्त्या महात्मनः। तस्मात् संप्रोच्यते विष्णुर्विशेर्द्धातोः प्रवेशनादिति॥ विष्णुपुराणतृतीयांशप्रथमाध्यायवाक्यात् स एवैतद्ब्रह्माण्डाधिपतिराकल्पान्तं जगत्स्थितिकारको महापुरुषोऽत्र गृह्यते एष एव सत्तावान् विष्णुः स्वसत्तया कल्पान्ते मेदिनीं त्यक्ष्यति। तदुक्तं श्रीमद्भागवत-पञ्चमस्कन्धे विंशेऽध्याये तेषां स्वविभूतीनां लोकपालानां विविधवीर्य्योपबृंहणाय भगवान् परममहापुरुषो महाविभूतिपतिरन्तर्य्याम्यात्मनो विशुद्ध-सत्वधर्म्मज्ञानवैराग्यैश्वर्य्याद्यष्टमहासिद्ध्युपलक्षणं विष्वक्सेनादिभिः स्वपार्षदप्रवरैः परिवारितो निजवरायुधोपशोभितैर्भुजदण्डैः संधारयमाणस्तस्मिन् गिरिवरे समन्तात् सकललोकस्थितये आस्ते॥ ४०॥ आकल्पमेष वेषंगत एवमात्मयोगमायया विरचितविविधलोकयात्रागोपीथायेत्यर्थः॥४१॥ इति वाक्यात् कल्पमध्ये कस्मिन्नपि कलौ विष्णोर्यात्रा सुतरां निरस्तेति। अथ चेवं भगीरथरथखातावच्छिन्नप्रवाहत्वं गंगा इति ज्ञातलक्षणवती भागीरथी गृह्यतेऽत्रेति तथा च ग्रामाधिष्टातृदेवताः स्थितिं च तासां प्रदर्शयितु-मन्यासामपि ब्रह्माण्डान्तर्गतवस्त्वधिष्टातृदेवतानां कार्य्याधिकारस्थिति-

कालः प्रोच्यते। पाद्मे। यत्र यत्राधिनाथेन नियुक्ताः पालनादिषु। आकल्पान्तं प्रवर्त्तन्ते ता अधिष्टातृदेवता इति वाक्यात्सर्वासामधिष्टातृदेवतानां श्रीमहाविष्णोराज्ञया तद्दत्त स्वस्वविहितकर्माधिकारतायामकल्पं जातायां सत्यां न कस्यापि वस्तुनोऽधिष्टातृदेवतायाः स्वाधिकारप्रयुक्तकालात् पूर्वमेव स्वगम्यपदयात्रा सम्भवतीति भावः फलितः। ताश्च लोकपाल-दिक्पाल-पर्वतपाल-दुर्गपाल--वनपाल-सन्ध्यापाल--प्रदोषपाल--शुभाशुभ-कर्मफलप्रदप्रभृतिभेदेन बहुविधाः सन्ति॥ प्रदर्शिताश्च दिङ्मात्रं श्रीमद्भागवते षष्ठस्कन्धे षष्ठेऽध्याये धर्मपत्नीवंशवर्णने यथा, भानोस्तु वेद ऋषभ इन्द्रसेनस्ततो नृप। विद्योत आसील्लंवायास्ततश्च स्तनयित्नवः॥ ५॥ ककुभः संकटस्तस्य कीकटस्तनयो यतः। भुवो दुर्गाणि जामेयः स्वर्गो नन्दिस्ततोऽभवत्॥ ६॥ विश्वे देवास्तु विश्वाया अप्रजांस्तान् प्रचक्षते। साध्योगणस्तु साध्याया अर्थसिद्धिस्तु तत्सुतः॥ ७॥ मरुत्वांश्च जयन्तश्च मरुत्वत्यां बभूवतुः। जयन्तो वासुदेवांश उपेन्द्र इति यं विदुः॥ ८॥ मौहूर्त्तिका देवगणा मुहूर्त्तायाश्च जज्ञिरे। ये वै फलं प्रयच्छन्ति भूतानां स्वस्वकालजम्॥ ९॥ सङ्कल्पायाश्च सङ्कल्पः कामः सङ्कल्पजः स्मृतः। वसवोऽष्टौवसोः पुत्रास्तेषां नामानि मे शृणु॥ १०॥ द्रोणः प्राणो ध्रुवोऽर्कोऽग्निर्दोषो वसुर्विभावसुः। द्रोणस्याभिमतेः पत्नरा हर्षशोकभयादयः॥ ११॥ प्राणस्योर्ज्जस्वतीभार्य्या सह आयुः पुरोजवः। ध्रुवस्य भार्य्या धरणिरसूतविविधाः पुरः॥ १२॥ इत्यादि अत्र विविधाः पुर इत्यस्यायमभिप्रायः पुरपत्तननगरग्रामादिभेदेन पुराणां बहुत्वे सति तदधिष्टातृदेवतानामपि विविधत्वम्॥ ताश्च भूमौ मण्डलपाल-क्षेत्रपाल-ग्रामदेवीबालदेवीखर्परीदेवीवृद्धदेवीश्मशानीप्रभृतिसंज्ञया प्रसिद्धाः एता एवाऽत्र गृह्यन्ते याश्च ग्रामपूजनमारी शान्तिप्रभृतिपद्धतिषु प्रकाशिताः याभिर्विना न ग्रामरचना रक्षा च मारीप्रभृत्युपद्रवेभ्यो भवितुमर्हति इत्यादि शास्त्राशयमज्ञात्वा वृथैव विष्णुपदीप्रयाणेऽधुना कोलाहलः क्रियते खपुष्पदर्शनवन्मूर्खैरिति सर्वथा निश्चीयते शास्त्रवचनैरित्यलम्॥ ननु गङ्गास्थितिसूचकवाक्यसमूहेन युक्त्या च सनत्कुमारसंहितास्थश्लोकतात्पर्य्यमन्तिमकलिपरं प्रतिपादितं तथापि तन्न मञ्जुलं प्रतिभाति अन्यपुराणादिवाक्यानां गङ्गागमनविधायकानां तत्र संघटनाऽभावात् तानि वाक्यानि च

प्रदर्श्यन्ते । तावत्तु ब्रह्मवैवर्त्ते कृष्णजन्मखण्डे नवतितमेऽध्याये नन्दं प्रति कृष्णवाक्यम् । कलेर्दशसहस्राणि हरिस्तिष्ठति मेदिनीम् । देवानां प्रतिमा-पूजा शास्त्राणि च पुराणकम् ॥ ३२ ॥ तदर्द्धमपि तीर्थानि गङ्गादीनि सुनि-श्चितम् । तदर्द्धं ग्रामदेवाश्च वेदाश्च विदुषामपि ॥ ३३ ॥ अन्यच्च, तत्रैवैक-विंशत्यधिकशततमेऽध्याये । कलेर्दशसहस्राणि मदर्चा भुवि तिष्ठति । तदर्द्धानि च वर्षाणि गङ्गाभुवनपावनीति । तथाच, तत्रैवाष्टाविंशत्यधिकशततमेऽध्याये श्रीकृष्णस्य गोलोकप्रस्थानसमये । गङ्गासरस्वतीपद्मावती च यमुना तथा । गोदावरीस्वर्णरेखाकावेरीनर्मदा मुने ॥१॥ शरावतीबाहुदा च कृतमाला च पुण्यदा ॥. समाययुश्च ताः सर्वाः प्रणेमुः परमेश्वरम् । उवाच जाह्नवीदेवी रुदन्ती परमेश्वरम् ॥२॥ साश्रुनेत्रातिदीना सा विरहज्वरकातरा । हे नाथ ! रमणश्रेष्ठ यासि गोलोकमुत्तमम् ॥ ३ ॥ अस्माकं का गतिश्चाऽत्र भविष्यति कलौयुगे इति जाह्नवीप्रार्थनानन्तरं, कलेः पञ्चसहस्राणि तिष्ठ वर्षाणि भूतले इत्याज्ञा दत्ता, तथा तत्रैव प्रकृतिखण्डे पञ्चमेऽध्याये कलेः पञ्चसहस्रे च गते वर्षे च मोक्षणम् इति । तथा तत्रैवाष्टमेऽध्याये श्रीकृष्णवाक्यं गङ्गां प्रति । अद्यप्रभृति देवेशि कालः पञ्चसहस्रकम् । वर्षं स्थितिस्ते भारत्याः शापेन भविता भुवीति । अन्यच्च बहुदोषं महादुःखं ज्ञात्वा मानुष्यमध्रुवम् । मत्वा कलियुगं घोरं गङ्गाभक्तिस्तु गोपिता ॥१॥ पुराणान्तरे च । कलेरयुत-वर्षान्तं विष्णुस्तिष्ठति मेदिनीम् । तदर्द्धं जाह्नवीदेवी ग्रामदेवास्तदर्द्धकम् ॥१ अयमेव श्लोकः किञ्चिल्लिखित्पाठान्तरेण बहुषु स्थलेषु दृष्ट एवमन्यान्यपि वाक्यानि बह्वनिनिर्गमावधिप्रकाशकानि सन्ति अतः स्थितिविधायकवाक्यानां दुर्बलत्वं वा गतकल्पाभिप्रायेणोक्तत्वं च स्यादिति चेन्न । अत्रोच्यते । पुराणानि तु प्रायो वेदमनुसरन्ति इति पूर्वमहर्षिगणवाक्यं जगति जागर्त्ति । अतः पुराणेषु यत्किञ्चिद्वेदविरुद्धं वाक्यं यत्र कुत्र प्रदृश्येत तत्सर्वं मीमांसायां प्रशंसा-त्मकं बोध्यं न तु सिद्धान्तस्थापकम् । किन्तु । वेदानुकूलमेव पुराणवचनं सिद्धान्ते भवतीति स्फुटमेव स्मृतिषु । यथा । पूर्वापरविरोधश्चेच्छास्त्रे तत्रा-स्त्ययं विधिः । वेदानुकूलो यः पक्षः शास्त्रसिद्धान्त एव स इति अतोऽत्रापि ऋग्वेदसंहितादिषु श्रुतिभिः प्रकाशितगङ्गास्थितिविषये तदनुकूलानि पुरा-णादिवाक्यानि सिद्धान्तरूपाणि तथाच निर्गमावधिप्रतिपादकवाक्यानि पूर्व-

पञ्चरूपाणि ज्ञेयानि । तत्रेयं प्रक्रिया । निर्गमावधिविधायकवाक्यैः कलौ गङ्गायात्राप्रकाशिता किन्तु कल्पमध्ये सहस्रसंख्याकपर्यावर्त्ते निर्गमावधिविषयककलिसंख्यानैव कथितास्ति । अतस्तर्हि कस्मिन् कलौ गङ्गा भुवं त्यक्ष्यतीति सन्देहे जायमाने सति वैशाखादिस्थितिविधायकवाक्यैरन्ते कलौ यास्यतीति स्पष्टमुक्त्वा सन्देहो निरस्त इति विज्ञेयमास्तिकैरिति । किञ्च, श्रुतिस्मृतिपुराणानां विरोधो यत्र जायते । श्रुतिस्तत्र प्रमाणं स्यात्तयोर्द्वैधे स्मृतिर्वरा इति । स्मृतेर्वाक्यादपि श्रुतिसूचितगङ्गास्थितिविषये निःसन्देहत्वात्तन्मतानुकूलपुराणादिवाक्यानां प्राबल्ये प्राप्ते निर्गमावधिवाक्यानां दुर्बलत्वं स्वतः समायातम् । तथाच । दुर्बलत्वं यदि वेदेऽपि श्रुतिषु क्वचित्पदे दृष्टं तर्हि स्वयं भगवता वेदेनैव त्यक्तं यथाधिकारं तदस्ति ज्ञात्वा सिद्धान्तम् । यथा । अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवतीति । अपामसोममस्मृता अभूमेत्यादिश्रुत्यपेक्षया । तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते । इति श्रुतेर्बलवत्त्वं तद्वद्वेदानुकूल्येनैव स्मृतिपुराणादिष्वपि निश्चितं भवति । अतोऽत्र निर्गमावधिवाक्यानां न ग्रहणं किन्तु गतकल्पाभिप्रायेणैव तेषां ग्रहणं कार्य्यं कल्पान्तरपरत्वं च तत्रैव ब्रह्मवैवर्त्त एव स्पष्टमुक्तं षष्ठेऽध्याये कलेः पञ्चसहस्रं च वर्षं स्थित्वा च भारते । जग्मुस्ताश्च सरिद्रूपं विहाय श्रीहरेः पदम् ॥ १ ॥ इति भूतकालिकाऽऽगमनस्थितिपुनर्गमनैरन्यकल्पीयत्वस्य स्फुटमुक्तत्वात् । तथाच तत्रैव नवमेऽध्याये । कलेः पञ्चसहस्राब्दे समतीते सुरेश्वरी । क्व गता सा महाभागा तन्मे व्याख्यातुमर्हसीति ॥ नारदेन प्रश्ने कृते नारायणेनोक्तम् । भारतं भारतीशापात्समागत्येश्वरेच्छया । जगाम तत्र वैकुण्ठं शापान्ते पुनरेव सा । भारतं भारती त्यक्त्वा जगाम च हरेः पदम् । गङ्गासरस्वतीलक्ष्मीश्चैतास्तिस्रः प्रिया हरेः ॥ तुलसी सहिता ब्रह्मंश्चतस्रः कीर्त्तिताः श्रुतौ इति ॥ कलेः पञ्चसहस्राब्दे समतीते श्रीजाह्नवी वैकुण्ठं गतेति भूतकल्पे प्रतीयते गङ्गया सहैव सरस्वतीलक्ष्मीतुलसीगमनकथनात् तथाद्यप्रत्यक्षमेव तद्विराजमानत्वाच्चेति । किञ्च ननु च गङ्गास्थितिवाक्यानां कल्पान्तरग्रहणाग्रहश्चेत् तथा निर्गमविधायकवाक्यानामिदानीं ग्रहणाग्रहश्चेत्कृते तेषु वाक्येषु ग्रामदेवादीनां यात्राकथनात् प्रत्यक्षेणेदानीं विरोधः तथा यावद्भागीरथीगङ्गा तावद्वेदाः कलौ युगे इत्यादिवाक्येष्वपि विरोधः ।

श्रीवेदानामिदानीं निर्गमाभावात् अतएव निर्गमवाक्यानां तत्सह शामदेव-वेदादियात्रासूचकवाक्यानामिव गतकल्पीयत्वं स्पष्टमेव । प्रत्यक्षमेवेदानीं शामदेवानां वेदमन्त्राणां च दत्तफलत्वात् । तथाच बहूनामनुग्रहो न्याय्य इति शास्त्राचारेणापि तत्त्वानां यात्रावाक्यानां कल्पान्तरे ग्रहणं योग्यम् । स्थितिविधायकवाक्यानां बहुत्वात् । अथोक्तमपि बहुत्वं पुनः प्रतन्यते ॥ केदारखण्डे बदरीमाहात्म्ये प्रथमेऽध्याये । तस्मात्सर्वप्रयत्नेन घोरे कलियुगे नरैः । कर्त्तव्यो बदरीवासः पापिनामपि मुक्तिदः ॥१॥ यत्र साक्षात्सरिच्छ्रेष्ठा गङ्गापापौघनाशिनी । यत्र ब्रह्मा च रुद्रश्च विष्णुश्चैव सुरोत्तमाः ॥ २ ॥ गन्धर्वाप्सरसश्चैव किन्नरा गुह्यकास्तथा । प्रमथा यक्षरक्षांसि वसन्ति हरि-मानसा इति वाक्ये गङ्गावासस्तत्र निरन्तरमुक्तः ॥ तथान्यत्र तत्रैव ॥ अग्नि-होत्रादिकर्माणि सापायानि कलौ युगे । गङ्गास्नानं हरेर्नाम निरपायमिदं द्वयम् ॥ १ ॥ अन्यच्च तत्रैव ॥ क्षेत्राणां पञ्चकं छिन्नं स्थास्यति प्रवरे कलौ । गङ्गाद्वारं स केदारं काशीगङ्गागमस्तथा ॥ गङ्गापि संगता यत्र सागरेण महामते । गङ्गापि स्थास्यतेऽत्रैव सत्यमेतद्विवेरितम् इति । स्कान्दे । गङ्गा मुक्तिप्रदा नित्या सदा ध्येया मनीषिभिः । लोपस्तस्या न वै जातु यतः सा ब्रह्मरूपिणी ॥ १ ॥ भारते वनपर्वणि पुलस्त्यतीर्थयात्रायाम् । सर्वं कृत-युगे पुण्यं त्रेतायां पुष्करं स्मृतम् । द्वापरे तु कुरुक्षेत्रं गङ्गा कलियुगे स्मृता ॥ १ ॥ गच्छध्वं हि सुरागङ्गां ज्ञात्वा विश्वमशाश्वतम् । अदूरे च कलौ प्राप्ते मुक्तिर्वो वाञ्छिता यदि ॥२॥ तथा कलेरन्ते युगप्रवृत्तये गङ्गाविष्णुभ्यां देवप्राकट्यतीर्थदानधनधर्मस्थापनं क्रियते इति स्पष्टम् । भविष्ये कलिधर्म-व्यवहारे प्रथमेऽध्याये । धर्मो विलुप्यते सर्वः सत्यं च प्रलयं गतम् । पृथ्वी मन्द-फला जाता कुटिला उत्तमा जनाः ॥८॥ धर्मो रसातलमितस्तारितं गङ्गया जगत् । प्रच्छन्नत्वं गता देवा गङ्गया प्रकटीकृताः ॥१०॥ नास्ति गङ्गासमो देवो नास्ति गङ्गासमः प्रभुः । प्रच्छन्नपातकैः पापैः स्नानवांश्चैव मुच्यते ॥११॥ इत्यादि । अतः कलौ । गङ्गातीरे वसेन्नित्यं गङ्गातोयं सदा पिवेत् । दीक्षितः सर्वयज्ञेषु सोमपानं दिने दिने ॥ इति गौतमादीन् प्रति व्यास-वाक्यं पुनस्तत्रैव द्वादशेऽध्याये कलेरन्ते देवानां प्रार्थनया । तदा विष्णुर्भवे-द्राजादानन्त्यणि कृतेक्षणः । नद्यः सर्वाः प्रकटिता गङ्गया परमेश्वर ॥ २२ ॥

विष्णुश्च दानधानर्योनपानङ्गा तथा धनम् । इति तस्मिन्नेवाध्यायेऽग्रे वैश-म्पायनवाक्यम्, अप्रार्थना द्विजा धन्या धन्यं व्यासवचस्तथा । गङ्गासर्वयुगे धन्या पातिव्रत्ये रताः स्त्रिय इति ॥ ४० ॥ तथा सामश्रुतयश्च इरावतीं मधु-मतीं पयस्विनीममृतरूपामूर्जस्वतीं त्रिदिवप्रसूतां गङ्गां श्रितासस्त्रिदिवं व्रजन्ति ॥ १ ॥ ऋषिजुष्टां विष्णुपदीं पुराणां पुण्याक्षरां मनसा हि लोके । सर्वात्मना जाह्नवीं ये प्रपन्नास्ते ब्रह्मणः सदनं प्रयान्ति ॥ २ ॥ उस्त्रैर्जुष्टा-मिषतीं विश्वरूपामिरावतीं जनयित्रीं गुहस्य शिष्टैः सेव्याममृतां ब्रह्मकान्तां गङ्गां श्रयेदात्मविशुद्धिकामः ॥ ३ ॥ इति । अर्थश्च ॥ इरावतीं सरस्वतीरूपां मधुमतीं सर्वप्रियकरां पयस्विनीं जलरूपां तत्रापि अमृतरूपां विकार-रहिताम् ऊर्जस्वतीं बृहद्बलां त्रिदिवप्रसूतां ब्रह्मलोकात् प्रकटीभूतां गङ्गां ये श्रितासः गङ्गामाश्रयन्ति ते त्रिदिवं व्रजन्ति ॥ १ ॥ विष्णुपदीं विष्णुप्राप्तिकरां ब्रह्मणः सदनं ज्योतिःस्वरूपं ब्रह्म ॥ २ ॥ उस्त्रैः देवैः सेवितां इषतीं स्वेच्छावतीं स्वप्रकाशाम् इरावतीं विद्याप्रदाम् अमृताम् अपायशून्यां विष्णुकान्ताम् इति ॥ ३ ॥ अत्र वर्त्तमानकालक्रियया नित्यत्वं द्योत्यते तथाऽमृताम् इति विशेषणेन स्फुटमेवाऽऽकल्पं स्थितिरुक्तेति विभा-वयन्तु सुधियः । तथाच । ऋग्वेदेऽष्टमाष्टके तृतीयेऽध्याये षष्ठे वर्गे पञ्चमो मन्त्रः । इमं मे गङ्गे यमुने सरस्वति शुतुद्रिस्तोम१ँ स च तापरुष्ण्या असिक्न्या मरुद्वृधे वितस्तयार्जकीये शृणु ह्या सुषोमयेति ॥ ५ ॥ इत्यत्र गङ्गायाः सहचरत्वदर्शनात् सर्वाभिः सहैव यात्रा प्रतिसूच्यते । सहचरत्वं यास्कमुनिना स्फुटीकृतं निरुक्ते अ० ८ पा० ३ खं ५ इमं मे गङ्गे यमुने सर-स्वति शुतुद्रि परुष्णिस्तोमं आसेवध्वम् असिक्न्या च सह मरुद्वृधे वितस्तया-चाऽऽर्जकीये आशृणुहि सुषोमया चेत्यादि । अत्र सायणभाष्ये प्रतीके एवोक्तं तदङ्गभूतास्तिस्रः प्रधानभूताः समस्तूयन्ते इमं मे इति मन्त्रेणेति अत्र विराजः पुंसोऽङ्गत्वप्रतिपादनात् विराट्स्थितिपर्यन्तं गङ्गास्थितिरिति भाष्यकारमतमित्यलमतिपल्लवितेन ।

इति श्रीनन्दकिशोरात्मजकृते श्रीगङ्गातत्त्वसन्दर्भे द्वितीयं प्रकरणम् ।

---

यस्यास्तत्त्वं न जानन्ति कलिमायाविमोहिताः । भ्रमन्तः शास्त्रगर्त्तेषु नौमि

तां जाह्नवीं पराम् ॥ १ ॥ अथवैतिथिपत्रेषु गङ्गायुर्ल्लेखकारणम्। प्रोच्यते शास्त्रवचनैः सद्वाक्यैश्च यथा मति ॥ २ ॥ ननु यदि निर्गमावधिवाक्यानां गतकल्पीयत्वं दृढीकृतं तर्हि पूर्वजैः शास्त्रज्ञकुशलैस्त्रिपथगामिनीस्नानपुरःसरधर्मावलम्बिभिः कथं न तिथिपत्रेषु श्रीजाह्नव्यायुर्ल्लेखे निषेधः कृत इति चेत् तत्रोच्यते। तिथिपत्रेषु ज्योतिर्विद्भिस्तावदुपोद्घाते एव कृतादीनां लक्षणानि प्रलिख्यन्ते। तानि तु युगायुः प्रमाणधर्म्माधर्म्मविष्णवतारसंख्यादिरूपाण्येव तथा गङ्गायुर्ल्लेखनमपि कलिलक्षणत्वेनैव विज्ञेयं चेति। तत्र तानि सर्वाण्येव लक्षणानि तु नहि प्रत्येकयुगचतुष्टयावृत्तौ संघटन्ते किन्तु तेषु कियल्लक्षणानि प्रतियुगावृत्तौ घटन्ते। कियल्लक्षणानि तु क्वचित् क्वचिदेव। यथा। वाराहमत्स्यकूर्म्मनृसिंहवामनपरशुरामरामबलभद्रश्रीकृष्णचन्द्रावताराणां कल्पे सकृदेवाऽऽविर्भावित्वेऽपि तिथिपत्रेषु कृतादीनां मध्येऽनियमतया कृततदवतारगणनात्वेन युगलक्षणमात्रमेव। तथाऽन्ते कलौ गङ्गायात्राभावित्वे सत्यपि गङ्गायुर्ल्लेखस्य कलिलक्षणमात्रत्वेनैव तेषां तात्पर्य्यमिति। अथावताराणां सकृदेवाविर्भावे प्रमाणान्युच्यन्ते। कल्पावतारा इत्येते कथिता वामनादयः। प्रतिकल्पं यतः प्रायःसकृत्प्रादुर्भवन्त्यऽमी ॥ १ ॥ तत्रापि क्वचित् क्वचिद्विशेषो दृश्यते। यथा श्रीवराहः। द्विराविरासीत्कल्पेऽस्मिन्नाद्ये स्वायंभुवान्तरे। प्राणाद्विधेर्द्धरोद्धृत्यै चाक्षुषीये तु नीरतः ॥ १ ॥ मत्स्योऽपि प्रादुरभवद्द्विःकल्पेऽस्मिन् वराहवत्। आदौ स्वायंभुवीयस्य दैत्यं घ्नन्नाऽऽहरच्छ्रुतीः ॥ २ ॥ अन्ते तु चाक्षुषीयस्य कृपां सत्यव्रतेऽकरोदिति। श्रीनृसिंहस्तु षष्ठेऽन्तरेऽब्धिमथनान्नृहरेः पूर्वभाविता अतः प्रागेव कूर्म्मादेर्व्यक्तिं षष्ठेऽन्तरे गत इति। श्रीकूर्म्मस्तु। पाद्मे प्रोक्तं दधे चोणीमयमेवार्थितः सुरैः। शास्त्रान्तरे तु भूधारीकल्पादौ प्रकटोऽभवत्। इति द्विराविरासीत् इति कृतयुगावताराः। अथ वामनः। वामनस्त्विरभिव्यक्तिं कल्पेऽस्मिन् प्रतिपेदिवान् तत्रादौ दानवेन्द्रस्य वाष्कलेरध्वरं ययौ ॥ १ ॥ ततो वैवस्वतीयेऽस्मिन् धुन्धोर्यज्ञमसौ गतः। अदितेः कश्यपाज्जातः सप्तमेऽस्य चतुर्युगे ॥ २ ॥ प्रतिग्रहकृते जातास्त्रय एव त्रिविक्रमाः इति। श्रीपरशुरामस्तु। रेणुका-यमदग्निभ्यां गौरो व्यक्तिमसौ गतः। प्राहुः सप्तदशे केचिद्द्वाविंशेऽन्ये चतुर्युगे ॥ १ ॥ श्रीराघवेन्द्रः। कौशल्यायां दशरथान्नवदूर्वादलद्युतिः। त्रेतायामाविरभवच्चतु-

विंशे चतुर्युगे ॥१॥ तथा हरिवंशे प्रथमपर्वण्येकचत्वारिंशेऽध्याये । चतुर्विंशे युगे चापि विश्वामित्रपुरःसरः । जज्ञे दशरथस्याथ पुत्रः पद्मायतेक्षणः ॥१२१ कृत्वात्मानं महाबाहुश्चतुर्धा प्रभुरीश्वरः । लोके राम इति ख्यातस्तेजसा भास्करोपमः ॥ १२२ ॥ इति वैवस्वतीयेऽस्मिन्नेवेति ध्येयं इति त्रेतावताराः । अथ रामकृष्णौ त्वष्टाविंशतितमे द्वापरान्ते कृष्णद्वैपायनादनुजाताविति स्पष्टमेव । विष्णुपुराणे पञ्चमेंऽशे त्रयोविंशेऽध्याये । मुचुकुन्दवाक्यं कृष्णं प्रति ॥ पुरा गर्गेण कथितमष्टाविंशतिमे युगे । द्वापरान्ते हरेर्जन्मयदुवंशे भविष्यति २६ इति द्वापरावतारौ ॥ अथ बुधकल्किनावष्टाविंशतितमे कलावेव नोचन चैते प्रतिकलौ मन्वन्ते इत्यनल्पऽस्वकृतोपयोगित्वान्नोच्यते अत्र विशेषव्याख्या जिज्ञासा चेत्तर्हि लघुभागवतामृते पञ्चब्रह्माण्डादितः संगृहीता द्रष्टव्या । किं बहुनाऽवतारादिवद्भागीरथीव्यवस्था च निःसन्देहैव विष्णुपुराणादिषु चरमे कलौ तद्वाताप्रमाणत्वात् अतएवावतारलेखनवद्गङ्गायुर्मानलेखेऽपि नो काचिद्दोषापत्तिरिति तात्पर्य्यम् । किञ्च अवतारादिरचनावत् केवलं भागीरथ्यायुः कलौ पञ्चसहस्राब्दमितमिति मानलेख्ये सत्यपि उक्तातात्पर्य्यानभिज्ञैरधुना गङ्गायुर्ङ्कसङ्क्रमस्तु प्रत्यब्दमन्धपरंपरयैव प्रलिख्यते अन्ते कलौ तद्भावित्वेन वेदादिषु तदऽप्रतिपादनात् । ननु च ज्योतिःशास्त्रमतेन ज्योतिर्विद्भिः पूर्वतोऽधुना पर्य्यन्तलेखः कृतः क्रियते चेत्यतो नान्धपरंपरा इति चेत् तदप्यसङ्गतम् । सूर्य्यसिद्धान्तादिसिद्धान्तेषु मकरन्दग्रहलाघवादिकरणग्रन्थेषु वाराहसंहितादिषु च विष्णुपदीयायुरानयनकथनाऽभावात् सिद्धान्ताद्यकथित सोपपत्तिक-जाह्नवी-याचासाधक-गणितान्तरस्याऽद्यावधि-श्रवणस्याप्यभावाच्च अन्धपरंपरयैव बहुकाललेखस्य सदाचारतायां ग्रहणमस्तु इति चेन्नहृदसंगतम् अन्धपरम्परायाः सदाचारताऽभावात् सदाऽऽचरितवेदकुलपरम्परा-द्वयविरोधित्वाच्च अथ परम्परात्रयलक्षणानि । वेदवाक्यानुकूलरीत्यनुसरणं वेदपरम्परा । वेदाविरुद्धहितार्थसूत्रकल्पितरीत्यनुसरणं कुलपरम्परा । शास्त्रविरुद्धस्वमतिकल्पितमार्गानुसरणमन्धपरम्परा । एषा नूनमग्राह्या लोकद्वयहानिदत्वात् अतस्तिथिपत्रेषु गङ्गायुर्ङ्कसङ्क्रमलेखनमपि नरकप्रदमतो दूरतस्त्याज्यं विमत्सरैरास्तिकैरिति प्रार्थयामि सुमतीनिति । अथाऽत्यन्तभ्रमितबुद्धीनामेव दृढबोधाय श्रीजाह्नव्यायुर्ङ्कसङ्क्रमलेखेऽन्धपरम्परैव कारण-

मित्युक्तमपि पुनः प्रतन्यते तत्रापि कारणत्रयं पूर्व्वमासीत् । यथा । प्रथमन्तु ।
कलेर्द्दशसहस्रान्ते इति सनत्कुमारसंहिताख्य कार्त्तिकमाहात्म्याष्टमाध्याय-
चतुर्विंशस्य श्लोकस्य तथान्यश्लोकानां च सम्बन्धतात्पर्य्यानऽभिज्ञत्वेनैवाऽवि-
चारिभिरुक्तादेनैव गङ्गायुर्ह्रासक्रमोल्लेखः कृत इतीषद्दर्शितमपि पुनः प्रदर्श्यते
तत्राधुना तावत्तदविचारित्वे भ्रमबाहुल्यदर्शनार्थं युगचतुष्टयावस्थाव्यवस्था
निरूप्यते श्रीभागवते तृतीयस्कन्धे एकादशेऽध्याये । कृतं त्रेताद्वापरञ्च कलि-
श्चेति चतुर्युगम् । दिव्यैर्द्वादशभिर्व्वर्षैः सावधानं निरूपितम् ॥ १८ ॥ चत्वारि
त्रीणि द्वे चैकं कृतादिषु यथाक्रमम् । संख्यातानि सहस्राणि द्विगुणानि शतानि
च ॥ १९ ॥ इति देवायुः प्रमाणेन युगावस्था नरायुः प्रमाणेन युगावस्था
ब्रह्मवैवर्त्ते कृष्णखण्डे षण्णवतितमेऽध्याये । अष्टाविंशतिसहस्राण्यधिकं परि-
माणकं । लक्षाणां च सप्तदशनराणां परिकीर्त्तितम् ॥६५॥ षण्णवतिसहस्राणि
लक्षैर्द्वादशभिः सह । नृणां वर्षैर्महाभाग त्रेता प्रोक्ता मनीषिभिः ॥ ६६ ॥
चतुःषष्टिसहस्राणि लक्षैरष्टाभिरेव च । नृणां वर्षैर्द्वापरञ्च कालज्ञैः परि-
कीर्त्तितम् ॥ ६८ ॥ द्वौ च त्रिंशत्सहस्राणि चतुर्लक्षप्रमाणकम् । नृणां वर्षैः
कलियुगं प्राहुर्वेदविदो जनाः ॥ इति तत्रापि पूर्वसन्ध्यांशयुगपश्चिम-
सन्ध्यांशभेदेन त्रिधावस्था सन्ध्यांशयोरन्तरेण यः कालः शतसंख्ययोः
तमेवाहुर्युगं तज्ज्ञा यत्र धर्मो विधीयते ॥ इति भागवते तृतीयस्कन्धे
मैत्रेयवचनात् तत्र कलेस्तु नरायुः प्रमाणेन तावत् षट्त्रिंशत्सहस्राब्द-
मितः पूर्वसंध्यांशः ततः षष्टिसहस्राधिकत्रिलक्षाब्दमितः कलिः तत-
स्तदुत्तरसंध्यांश इतिक्रमः । तत्राधुना कलेः पूर्वसंध्यांश एव ततः कलि-
र्भविष्यतीति हेमाद्रिप्रभृतिग्रन्थेषु स्पष्टमेव तत्रैव च पुराणादिसम्मतेन
युगानां चतुश्चरणत्वं संध्यांशमध्ये कीकृत्येति प्रतिपादितं तत्र पूर्वसंध्यांशः
प्रथमे पादे संगृहीतः उत्तरश्चतुर्थे पादे इति बोध्यम् । एवं च सति अष्ट-
सहस्रोत्तरैकलक्षाब्दपरिमितः कलेरेकः पादः एवं चत्वारः पादास्तस्येति
तत्राद्यपूर्वस्मिन्नेव संध्यांशसहिते प्रथमे पादे संध्यांशपरिमाणवर्षाणामेव मध्ये
तिथिपत्रेषु चरमकलिलेख्य गङ्गायुर्ह्रासक्रमलेखनं न सम्भवन्ति उक्त श्लोके
तथान्येषु च कलिशब्दस्य संध्यांशयोरन्तरेणेति वाक्येन । तथा विष्णुपुराणेऽपि
तृतीयेऽध्याये संध्यासंध्यांशयोरन्तर्यः कालो मुनिसत्तम ॥ युगाख्यः स तु

विज्ञेयः कृतत्रेतादिसंज्ञितः। इति पराशरवाक्येन च युगपरत्वात् अतएव नैव संध्यांशपरत्वं कलिशब्दस्य शास्त्रोक्तयुगावस्थानियमविरोधात् संध्यांशयोरन्तरेणेति वाक्ये मिथ्यात्वापत्तेश्चेति। किम्बहुना इत्याद्याशयतात्पर्य्यानभिज्ञाः केचनचये मुग्धाः श्लोकार्थे तु कलिशब्दस्य युगपरत्वमुक्तापि भ्रान्त्यैव स्वमनीषया कल्पितेऽनर्थे विश्वसिताः अधुना कलेः पूर्वसंध्यांश एव श्रीजाह्नव्याः स्वः प्रयाणाऽब्दीनकरणं प्रतिवत्सरं लिखन्ति वदन्ति चैवं तेषां मतेनैव तन्मतं निरस्तं इदानीं कलेरप्रवृत्तेरिति एवं च सिद्धान्ते सति तेषां भ्रान्तमतीनां एतत्कलिविषयकारोपितभ्रमार्थेऽपि भ्रमदर्शनात् महदसङ्गतेनाज्ञानेन तिथिपत्रस्थजाह्नवीदेव्यायुर्ज्ञासक्रमलेखाग्रहे जड़ान्धपरम्पराप्रभावस्मृते किं खलु वाच्यं हीति सहास्यं विभावयन्तु सन्तः इति ॥ १ ॥ अथ द्वितीयं कारणं महन्मुखश्रुतमेव प्रलिख्यते केचनचकास्य चिद्गङ्गाभक्तस्य स्वदेशाधिपस्याज्ञानुवर्त्तिनस्तदानीं श्रीविष्णुपद्यभक्तानामपि मोक्षमभीप्समानाः स्वयमपि श्रीजाह्नवीप्रभावज्ञाः तदविश्वसितानपि प्रत्युत्साहयितुं तान् समाम इत्युक्तवन्तः भोजनाः श्रीब्रह्मद्रवसेवनेन पापिनामपि शीघ्रं मुक्तिर्भवतीत्यस्माद्धर्म्मज्ञाः यूयमेव जाह्नव्याः सविधिस्नानं कृत्वाऽस्मिन्नेव जनुषि मुक्तिभाजो भवत चेद्यदीह विघ्नभावः स्यात्तर्ह्यागामि जनुषि तु नूनमेव वो मुक्तिर्भविष्यति। नन्वेवं गङ्गामाहात्म्यं तर्हि पुनर्जन्मान्तरे गङ्गाभक्तिस्नानादिकं कृत्वा भवन्तरिष्याम इति चेत् तत्तु महद्दुर्घटं श्रीभागीरथ्या अल्पकालस्थितेर्यत्र कुत्र लब्धप्रमाणत्वात् अतएव सर्वभावेन गङ्गां शीघ्रं भजत जन्मान्तराणान्तु इह कृतपापपुण्यादिभुक्तौ सत्यामल्पकालत्व दुर्विचिन्त्यत्वात् इत्येवं गङ्गाविमुखजनकदम्बप्रोत्साहनपराः कृतोपदेशा घोषाः पुनश्चाल्पकालेनैव गङ्गास्नानधर्म्मपरांस्तान् कचित् कांचिदालक्ष्य तद्विश्वासायाऽन्येषां च प्रवर्त्तनाय श्रीगङ्गानिर्गमावधिवर्षाणामूनकरणं प्रत्यब्दमङ्गीकृत्य तथा तिथिपत्रेषु प्रकाशितवन्त इति। तदानीं च महात्मानोऽपि चैतद्विचारं कृतवन्तः। नच धर्म्मसमो बन्धुर्न च धर्म्मसमं यशः। न च धर्म्मसमो लाभो नैव धर्म्मसमं सुखम् ॥ १ ॥ तस्मादुपार्जयेद्धर्म्ममवरेणापि कर्मणा। सर्वसिद्धिकरं नित्यं परत्र च गतिप्रदम् ॥२॥ इति स्मृतेः। येन केन प्रकारेण यथापि परिभावितम्। धर्मं न दूषयेत् प्राज्ञः सेवतां संसेवयेत् सदा ॥ १ ॥ इति नीतिशास्त्रवाक्यादपि तथा

च न स्वधर्मात्परो योगो न स्वधर्मात्परं तपः । न स्वधर्मात्परो यज्ञो न स्वधर्मात्परं बलम् ॥ १ ॥ तस्मात् संस्थापयेद्धर्मं न हि धर्मसमः सुहृत् । निर्मूलेनापि मार्गेण वर्द्धितं वर्द्धयेत् स्वयम् ॥ २ ॥ इत्यादिपुराणवचनैश्च इदं निष्पन्नं भवति स्वकपोलकल्पितमार्गेण वाऽन्यकल्पितान्धपरम्परामार्गेणापि केनचिदेव स्थापितं तीर्थस्नानदानपूजायज्ञादिरूपं धर्मं श्रद्धया सेवेत तथाऽज्ञानेऽप्युपदिश्य संसेवयेत् तेनैव यथासेव्यमानं च धर्मं न विदूषयेत् इति स्मृत्याद्याशयादन्यथाचरणं चेदधुना धर्मघ्नत्वाऽऽपत्तिरस्माकमिति शङ्कमानाः अथच कलेः पञ्चसहस्राब्दान्ते एतदुत्तरफलाऽनर्थं आपतिते तु श्रीजाह्नवीतत्त्वदर्शिनः सन्तोऽस्माकं भ्रान्त्यादिकं दत्वा पुनः शुद्धगङ्गातत्त्वोपदेशं करिष्यन्तीत्याशावद्धनिश्चयाश्च तेषामल्पज्ञानां तिथिपत्रकृतभ्रमोल्लेखं ज्ञात्वापि श्रीजाह्नव्यामाहात्म्यविवर्द्धनपुरःसरभक्तिप्रवर्त्तनपूर्वकं तात्कालीयप्रजाकल्याणाय दीर्घदर्शिनस्ते विद्वांसः स्वयमपि तल्लेखं स्वीकृतवन्त इति ॥ २ ॥ अथ तृतीयं कारणं तु यथाश्रुतं प्रलिख्यते । यथा अत्रभारतवर्षेऽस्मत्पालकपरमधार्मिकयुधिष्ठिरप्रभृतिनृपवर्य्यैराजधानीशक्रप्रस्थप्रभृतिषु वैदिक-धर्मपालकानां राज्ये समतिक्रान्ते यवनराज्यमासीत् तैश्च याहशीहानिरस्मद्धर्मे कर्मणि च कृता तां वक्तुं हृदयदाहपूर्वकं सकम्पश्च रोमोद्गमयुता भवति तनुः तथापि तत्रैतावदेवोच्यते । तत्कृतास्मद्देवप्रतिमामन्दिरादिखण्डने सति नः पूर्वजान् परावरज्ञान् पण्डितानाहूय तैर्यवनभूपैर्दृष्टतयोक्तं यूयं स्वपूज्या गङ्गाप्रभावं दर्शयत नो चेत्स्नानं त्यजध्वम् अन्यथा चेद्दोवन्धनं करिष्याम इति । अतः सर्वे संमन्त्र्यशीघ्रमल्पैरहोभिरेवास्मदुक्तवचनद्वये स्वेष्टमेकं कुर्वन्तु भवन्त इत्येवं सति देशकालज्ञैः परमापन्नैस्तैर्महात्मभिः परस्परं संमन्त्र्यकृत्वा विचारं च गत्वा यवनेशपार्श्वमित्युक्तम् । कलिपञ्चसहस्रान्तमनुगमिष्यमाणायाः स्वयमेवाऽस्थिरायाः कं प्रभावं दर्शयिष्याम इति । ततश्च । पुनः सनत्कुमार-संहिताकार्त्तिकमाहात्म्याष्टमाध्याय-चतुर्विंशतितमः श्लोकस्तथैतज्जातीयवाक्ययुक्तश्लोकद्वन्द्वश्च तद्वचनपूर्वकं स्वधर्मरक्षणाय प्रमाणत्वेन दर्शितः ततश्च दृष्ट्वा तद्वचनाऽनभिज्ञैर्यवनैरुपेक्षापूर्वकमेतदुक्तम् एवं चेत्तर्हि ज्ञातं भवद्भ्रायां गङ्गात्वमतो यथेच्छं स्नानं कुरुत किन्तु स्वीयधर्ममार्गप्रचारकतिथिपत्रेषु गङ्गाऽऽयुर्क्षीसङ्क्रमोल्लेखं प्रत्येकवत्सरं कुरुत तथाच विक्रमादि-

शकाब्दलेखवत्तत्रास्मदीयशकमपि लिखतेति श्रुत्वाऽऽपन्नस्ताः परमकुशलास्ते विद्वांसः स्वकीयधर्मविरोधिनामपि तेषामुक्तवचनद्वयं तदा स्वधर्मरक्षणायैव स्वीचक्रुरिति तत आरभ्य तद्राज्यमन्वप्यऽन्धपरम्परालेखः प्रवृत्त इति। किञ्च अत्राऽविश्वसितैस्तु कोविदैः तद्राज्यसमयस्थतिथिपत्रे ष्वेव श्रीभागीरथ्या आशुक्लसङ्क्रमलेखस्तथा यवनशकोल्लेखश्च नूनं द्रष्टव्यः। पूर्वत आसीद्वा तत आरभ्यैवेति। अस्मज्ज्येष्ठपितृव्यैः श्रीमोहनलालशर्मभिस्तु सदय एव पूर्वकालीययवनराज्यतिथिपत्राणि तत्पूर्वाण्यपि विलोक्य तन्निश्चयः कृतः श्रीगङ्गानिर्गमाऽब्दीनकरणं न तु यवनराज्यतः पूर्वमासीत्। इत्यत्राज्ञानां दृढविश्वासाय सुमतिभिः पुनरपि तथा दृष्ट्वा निश्चयः कारयितव्य इति। किम्बहुना तदारभ्याद्यपर्यन्तमापन्मुक्तैरपि ज्योतिर्विद्भिः कैश्चित् पण्डितैर्विचारं त्यक्त्वाऽन्धपरम्पराग्रस्तैः प्रत्यब्दं श्रीगङ्गायुक्लसङ्क्रमलेखः क्रियते इत्यलम् ॥ १ ॥ इति श्रीरामदत्तात्मज-श्रीनन्दकिशोरशास्त्रिसूनुकृते श्रीगङ्गातत्त्वसन्दर्भे तृतीयं प्रकरणम् ॥ ३ ॥

---

गङ्गापाङ्गादुरङ्गानामङ्गानामपिशोधकाः। अभङ्गानङ्गसङ्गाङ्गभङ्गाद्यास्ते जयन्ति हि ॥१॥ अथागमनमम्बायाः पुराणेषु विरुध्यते। काशीरामप्रणीतेन सङ्गतिस्तस्य लिख्यते ॥ २ ॥ ननु च कदा भुवि गङ्गाप्रादुर्भावो जात इति न निश्चयपदं समायाति। पुराणादिषु तस्य बहुप्रकारेण वर्णनात्। तथाहि वाल्मीकीयरामायणे तु। भगीरथोऽपि राजर्षिर्दिव्यं स्यन्दनमास्थितः प्रायादग्रे महातेजा गङ्गा तञ्चाप्यनुव्रजत् ॥ १३ ॥ इत्यादिश्लोकैः। ततः सगरात्मजोद्धारे सति विरञ्चिवाक्यम्। प्राप्तोऽसि परमं लोके यशः परमसम्मतम्। यच्च गङ्गावतरणं त्वयाकृतमरिन्दम ॥ ५१ ॥ अनेन च भवान् प्राप्तो धर्मस्यायतनं महदित्यादिना। गङ्गाप्रादुर्भावः सप्तमेऽस्मिन् वैवस्वतमन्वन्तरे चतुर्विंशे त्रेतायुगे कपिलाज्ञया भगीरथतपोनिमित्तक आसीदिति। एवं भागवते नवमस्कन्धे नवमेऽध्यायेऽपि। भगीरथः सराजर्षिर्निन्ये भुवनपावनीम्। यत्र स्वपितॄणां देहा भस्मीभूताः स्म शेरते ॥ १० ॥ रथेन वायुवेगेन प्रयान्तमनुधावती। देशान् पुनन्ती निर्दग्धानाऽऽसिञ्चत्सगरात्मजान् ॥ ११ ॥ इति सगरात्मजोद्धारायैव भगीरथकृत एव प्रसिद्धः ॥ अथांस्यावरोधक एव

द्वितीयो गङ्गाप्रादुर्भावस्ततो भगीरथात् पूर्वमेव वैवस्वतमन्वन्तर एव सप्तमे त्रेतायुगे बलेर्यज्ञे त्रिविक्रमचरणजातः श्रूयते। भागवते पञ्चमस्कन्धे सप्तदशेऽध्याये। तत्र भगवतः साक्षाद्यज्ञलिङ्गस्य विष्णोर्विक्रमतो वामपादाङ्गुष्ठनखनिर्भिन्नोर्ध्वाण्डकटाहविवरेणान्तः प्रविष्टा या बाह्यजलधारा तच्चरणपङ्कजावनेजनारुणकिञ्जल्कोपरञ्जिताऽखिलजगदघमलापहोपस्पर्शनाऽमला साक्षाद्भगवत्पदीत्यनुपलक्षितवचोऽभिधीयमानाऽतिमहताकालेन युगसाहस्रोपलक्षणेन दिवो मूर्द्धन्यवततारेत्यन्तेन। न च दिवो मूर्द्धन्यवततारेत्यन्तेन वियद्गङ्गा ज्ञायते सा भगीरथानयनात् पूर्वं भुवि नावततारेति वाच्यम्। पञ्चमस्कन्धसप्तदशाध्यायवाक्येनैव तस्या भुवि आगमनप्रसिद्धेः। तथाहि। तथैवालकनन्दा दक्षिणेन ब्रह्मसदनाद्बहूनि गिरिकूटान्यतिक्रम्य हेमकूटान्यतिरभसतररंहसा लुठयन्ती भारतमभिवर्षं दक्षिणस्यां दिशि जलधिमभिप्रविशति ॥८॥ तथा विष्णुपुराणेऽपि विष्णुपादविनिष्क्रान्ता प्लावयन्तीन्दुमण्डलम्। समन्ताद्ब्रह्मणः पुर्यां गङ्गा पतति वै दिवि। सा तत्र पतिता दिक्षु चतुर्द्धा प्रत्यपद्यत सीता चालकनन्दा च चक्षुर्भद्रा च वै क्रमादिति वाक्यवृन्देन गङ्गाया भुव्यागमनं च प्रसिद्धम्। एवं च सत्यऽस्याप्यवतरणस्य प्रतिबन्धका स्वायंभुवमन्वन्तरे गङ्गास्थितिः श्रूयते। भागवते चतुर्थस्कन्धे पृथुचरिते। गङ्गायमुनयोर्नद्योरन्तरा क्षेत्रमावसन् आरब्धानेव बुभुजे भोगान् पुण्यजिहासया इति श्लोकेन पृथुराज्यं तु स्वायंभुवमन्वन्तर एवासीत् तथाच स्वायंभुवेऽन्तरे यज्ञ एवेन्द्रोजात इति भागवते प्रथमस्कन्धे तृतीयेऽध्याये। ततः सप्तम आकूत्यां रुचेर्यज्ञोऽभ्यजायत। सयामाद्यैः सुरगणैरपात्स्वायंभुवान्तरम् ॥१२॥ तथा तत्रैव चतुर्थस्कन्धे प्रथमेऽध्याये। तां कामयानां भगवानुवाह यजुषां पतिः। तुष्टायां तोषमापन्नो जनयद्द्वादशात्मजान् ॥ ६ ॥ तुषितानामते देवा आसन् स्वायंभुवान्तरे। मरीचिमिश्रा ऋषयो यज्ञः सुरगणेश्वरः ॥ ८ ॥ इति वाक्येन। तथाच पृथुकाले यज्ञ एवेन्द्रः इति पृथुचरितेनैवावगम्यते यज्ञेन सह तस्य विरोधात् तयोर्विरोधशान्त्यर्थं ब्रह्मवाक्यं च तत्रैव श्रूयते न वध्यो भवतामिन्द्रो यद्यज्ञो भगवत्तनुः। यज्जिघांसथ यज्ञेन यस्येष्टास्तनवः सुरा इति श्लोकेन। इत्यतः स्वायंभुवान्तरे यज्ञे इन्द्रे पृथुराज्यमतस्तत्र गङ्गायां विद्यमानत्वं निःसन्देहमेवेति। अन्यत्र च यस्मिन् यज्ञे महादेवे दक्षस्य

विद्वेषः समजनि तस्य विश्वसृग्भिः कृतस्य यज्ञस्यान्तेऽवभृथस्नानं प्रयागे तैः कृतमित्यपि श्रीभागवते चतुर्थस्कन्धे श्रूयते। यथा, आप्लुत्यावभृथं यत्र गङ्गायमुनयान्विता विरजेनात्मना सर्वे स्वं स्वं धाम ययुः सुरा इति। तदपि स्वायंभुवमन्वन्तर एवासीदिति गम्यते. प्राचीनवर्हिषो राज्ञस्तत्र सत्त्वात् तथाहि। वाता न वान्ति नहि सन्ति दस्यवः प्राचीनवर्हिर्जीवतिहोग्रदण्ड इति। दक्षयज्ञविध्वंसनायागतेषु रुद्रभटेषु यज्ञस्था ऋत्विगादयस्तत्स्त्रियोऽपि वितर्कयामासुः अतो बुध्यते प्राचीनवर्हिः स्वायंभुवमन्वन्तरे राजाऽऽसीत् यज्ञश्च तदानीन्तन इन्द्र आसीत्। तथाच दक्षयज्ञविनाशे भूतादिपीड़ितान् सुरान् प्रति ब्रह्मणोवाक्यम्। नाहं न यज्ञो न च यूयमन्ये ये देहभाजो मुनयश्च तत्त्वम्। विदुः प्रमाणं बलवीर्य्ययोर्वा यस्यात्मतन्त्रस्य क उपायं विधित्सेत् इति। अस्य टीकायां च स्वामिचरणैः यज्ञस्तदानीन्तन इन्द्र आसीदिति लिखितम्। किंबहुना। स्वायंभुवेऽन्तरे गङ्गाया विद्यमानत्वं सर्वथा निश्चीयते। स्वयं मनुनैव सा गङ्गां मा कुरून् गमः इत्यनृतभाषणप्रायश्चित्ते गङ्गास्नानस्य कथनात् देवनद्योर्यदन्तरमिति मध्यदेशसीमाविधावपि तत्कृतगङ्गाग्रहणाच्च एवं स्वायंभुवमन्वन्तरात्पूर्वमेव दैनन्दिनप्रलयेऽपि गङ्गास्थितिः श्रीभागवततृतीयस्कन्धे सनकादीनां श्रीशेषान्तिके भागवतश्रवणार्थंगमने श्रूयते। स्वर्धुन्युदार्द्रैः स्वजटाकलापैरुपस्पृशन्तश्चरणोपधानमिति श्लोकेन। एवं च सति दैनन्दिनप्रलये तथा प्रथमे स्वायंभुवमन्वन्तरे यदि गङ्गायाः स्थितिः पृथिव्यामासीत्तर्हि सप्तमेऽस्मिन् वैवस्वतेऽन्तरे सप्तमे त्रेतायुगे वलेर्यज्ञे उद्भवः किमिति निरूपितः ततोऽपि पश्चात्कपिलाज्ञयाऽस्मिन्नेव मन्वन्तरे चतुर्विंशे त्रेतायुगे भगीरथद्वारा श्रीगङ्गायाः प्रादुर्भावो निरूपित इति कथं सङ्गच्छते। इति सन्देहे जायमाने सिद्धान्तो निर्णीयते। श्रीगङ्गायाः प्रादुर्भावस्य तावद्भगवतः प्रादुर्भाववत्सत्वेऽपि समयविशेषेषु कारणान्तरेण स पुनः पुनर्वर्ण्यते। यथा, भूगोलकवर्णने उपास्योपासकभावेन नवसु खण्डेषु वराहाद्यवताराः वर्णिताः तेषामवतारास्तत्र तत्काले श्रूयन्ते यथा। भरतखण्डे उपास्यः श्रीनारायण उपासकः श्रीनारदः तथाऽन्येष्वपि खण्डेषु ते तेऽवताराास्तेषां तेषां च उपासकाश्च सन्ति। एवं च सति। स्वायंभुवमन्वन्तरे स्वायंभुवदक्षादेव जातायां मूर्त्यां धर्म्मान्नरनारायणौ मूर्त्तिभेदेनावतीर्णौ

ततोऽपि पूर्वं स्वायंभुवमन्वन्तरे भरतखण्डे पूज्यत्वेन नरनारायणौ स्थितौ भगवदवताराणां देवभौमबिलवैकुण्ठेषु मूर्त्तिभेदेन स्थितत्वं यावत्कल्पाधिकारस्तावन्निश्चितम् । तथाच पाद्मे वैकुण्ठसदने नित्ये निवसन्ति महोज्ज्वलाः अवतारास्तदा तत्र मत्स्यकूर्म्मादयोऽखिलाः । हानोपादानरहिता नैव प्रकृतिजाः क्वचित् । न च पाद्मवचनेन वैकुण्ठपदश्रवणात् भौमो बिलस्थ वैकुण्ठो न भवतीति वाच्यम् । यत्र यत्र भगवान् साक्षात्तिष्ठति तत्र तत्र वैकुण्ठोऽस्तीत्यभिप्रायात् वैकुण्ठपदस्योपलक्षणत्वाच्च मन्निकेतन्तु निर्गुणमिति भागवतैकादशस्कन्धे भगवद्वाक्याच्च । एवं च सति श्रीगङ्गाया न केवलं त्रिविक्रमचरणोद्भवत्वमङ्गीकर्त्तव्यं तस्याः सुगुणब्रह्मद्रवत्वात् तच्चरणोद्भवत्वं च केनचिद्धेतुना श्रीनृसिंहादिवदाविर्भावो मन्तव्यः । भगवतो यथाविर्भावे निमित्तं तद्वद्गङ्गाया अप्याविर्भावे निमित्तं स्वीकर्त्तव्यम् । तथाच गीतायां परित्राणाय साधूनां विनाशाय च दुष्कृताम् । धर्म्मसंस्थापनार्थाय सम्भवामि युगे युगे इतिवद्गङ्गाया अपि ज्ञातव्यम् । तथाहि यतः कल्पारम्भस्तत एव ब्रह्माण्डरचनासहभूतः भूलोग-खगोलयोः प्रादुर्भावस्तत्सहभूतः भुवि सप्तसमुद्राणां गङ्गायमुनादिनदीनां सुमेर्वादिपर्वतानां च प्रादुर्भावो ज्ञेय इति एवं स्थितिरप्याऽऽकल्पान्तं विज्ञेया च अतः स्वायंभुवमन्वन्तरमारभ्य चतुर्द्दशमन्वन्तरेषु श्रीगङ्गापि लोके स्थास्यत्येव तथापि केनचिन्निमित्तेन तिरोभावे जाते वैवस्वतमन्वन्तरे त्रिविक्रमचरणादुद्भूता ततस्तु केनचिद्धेतुना तिरोभावे ह्यऽजातेऽपि कपिलब्रह्मर्षिणा । ब्राह्मणातिक्रमे दोषो ब्राह्मणनैव हन्यते इति वाक्यानुसारेण ब्राह्मणापराधजं दोषं ब्राह्मणपादोदकसेवनेनैव नश्यतीति प्रख्यापयित्वा श्रीभगवदवतारवामनब्रह्मर्षिपादोदकेन सगरात्मजोद्धारोऽस्त्वित्यभिप्रायवता च भो राजन् ! विधिकमण्डलुस्थवामनपादशौचजलं गङ्गारूपेण यद्यायात्तर्हि त्वत्पूर्वजोद्धारो भविष्यतीत्यंशुमते नृपायाऽऽज्ञादत्ता इति कपिलाज्ञापूर्त्तये भक्तवत्सला गङ्गा अलकनंदारूपेण भूमौ स्थितापि भागीरथीति द्वितीयरूपेण प्रसिद्धिं गत्वा पुनरलकनन्दायामेव देवप्रयागे मिलित्वा सगरात्मजानुद्दिधीर्षुर्वैवस्वतमन्वन्तरे भगीरथद्वारा प्रादुर्भूता इति गम्यते । आगतस्य पुनर्गमनं विना पुनरागमनं न घटते इति नियमात् स्वायंभुवान्तरे तिरोभावे कारणं मन्तव्यम् । अत्र श्रीगङ्गाया आविर्भावतिरोभावौ केवलं मनुष्याणां

दर्शनाऽदर्शनात्मकौ बोध्यौ विराजः पुंसो नाडीरूपेण सदा स्थितत्वात् तथा चात्र * सप्रमाणिका उपपत्तिर्लिख्यते जह्नुना योगबलेन क्रोधात्पीता गङ्गा पुनरपि वैशाखशुक्लसप्तम्यां तद्दक्षिणकर्णादुद्भूता इति प्रमाणं पुराणादावस्त्येव । तथाच ब्राह्मे । वैशाखशुक्लसप्तम्यां जह्नुना जाह्नवीपुरा । क्रोधात्पीता पुनस्त्यक्ता कर्णरन्ध्रात्तु दक्षिणादिति । तथाच वाल्मीकीयरामायणेऽपि बालकाण्डे । ततो हि यजमानस्य जह्नोरद्भुतकर्मणः । गङ्गासंप्लावयामास यज्ञवाटं महात्मनः ॥ २१ ॥ तस्यावलेपनं ज्ञात्वा क्रुद्धो जह्नुस्तु राघव । अपिवत्तु जलं सर्वं गङ्गायाः परमाद्भुतम् ॥ २२ ॥ ततो देवाः सगन्धर्वा ऋषयश्च सुविस्मिताः । पूजयन्ति महात्मानं जह्नुं पुरुषसत्तमम् ॥ २३ ॥ गङ्गाञ्चापि नयन्ति स्म दुहितृत्वे महात्मनः ॥ २४ ॥ ततस्तुष्टो महातेजाः श्रोत्राभ्यामसृजत्पुनः । तस्माज्जह्नुसुता गङ्गा प्रोच्यते जाह्नवीति च ॥ २५ ॥ जगाम च पुनर्गङ्गा भगीरथरथानुगा । सागरञ्चापि संप्राप्ता सा सरित् प्रवरा तदा ॥२६॥ इतिवत् स्वायंभुवान्तरेऽपि ज्ञेयम् । इत्येवं सिद्धान्ते जायमाने गङ्गाप्रादुर्भावे तथा भगीरथरथखातनिवासाय श्रीगङ्गयैव कृतप्रतिज्ञत्वाद्भगीरथानयनादनुकल्पान्तं गङ्गास्थितिविषयेऽपि सुधीभिः सन्देहो न कार्य्य इति ॥ किञ्च । नन्वत्र कलियुगद्वितीयपादयात्राविधायकवाक्यमपि श्रूयतेऽतः किमिति भगीरथानयनादनुगङ्गायात्रा नेत्युच्यते तथाहि केदारखण्डे सप्तसप्तत्यधिकशततमेऽध्याये गङ्गावासुकिसंवादे । भगीरथेन कैलासादानीतास्मीह वासुके । निमज्जितास्मिभूमौ हि पितृणां मुक्तिकारणात् । साम्प्रतं तदवश्यं हि कर्त्तव्यं भगवन्मया । चरमेऽस्मिन् युगे भूय आगमिष्यामि ते स्थलम् । इदानीं मुञ्च मां शीघ्रं समुद्रे मे गतिर्मतेति ॥ तथा चापि भगीरथं प्रति गङ्गावाक्यं तत्रैव श्रूयते । भगीरथमहाप्राज्ञ एवमेव भविष्यति । यावच्चन्द्रग्रहेशाद्याः स्थास्यन्त्यम्बरमण्डले ॥ तावत्कीर्त्तिर्महाराज भविता ते त्रिलोकके । नामापि तव च श्रुत्वा सर्वपापैः प्रमुच्यते ॥ कलेर्द्वितीयपादे तु गमिष्यामि पुनस्स्थलमिति । एवं च सति । पूर्वं निर्णीताऽन्तिमे कलौ गङ्गायात्रासुतरां निरस्तैव पूर्ववदत्रापि कारणश्रवणादिति । अत्रोच्यते । वासुकिं प्रति तु मूर्त्तिदर्शनदायक-श्रीभागीरथीवरप्रदानाऽभिप्रायोऽस्तीत्यत्र बोध्यम् । कुतः । यस्यामलं दिवि यशः

* गङ्गाऽऽविर्भावतिरोभावनिमित्ते ।

प्रथितं रसायां भूमौ च ते भुवनमङ्गलदिग्वितानं । मन्दाकिनीति दिवि भोगवतीति चाधोगङ्गेति चेह चरणाम्बुपुनातिविश्वम् ॥४४॥ इति भागवतदशमस्कन्धसप्ततितमाध्यायवाक्यात्पाताले भोगवतीति प्रसिद्धधारायाः सदा विद्यमानत्वात् ब्रह्मद्रवस्य पुनः प्रवेशोनसङ्गच्छतेऽतः श्रीब्रह्मवैवर्त्तपुराणे प्रकृतिखण्डनवमेऽध्याये । द्रवाधिष्ठातृदेवी या रूपेणा प्रतिमा भुवि । नवयौवनसम्पन्ना-रत्नाभरणभूषिता इत्यादिश्लोकोक्ता चिद्द्रवस्यैवानिर्वचनीयाशक्तिर्मूर्त्तिमती-प्रसिद्धास्ति तस्या एव भक्तेच्छया सर्वत्र दर्शनदानं गमनं च सङ्गच्छते । तथाचोक्तं कैश्चिदभियुक्तमहानुभावैः । स्वर्गे भुवि च पाताले द्रवरूपा सदा स्थिता । तथापि तस्मादन्यत्र चाहूता यज्ञकर्मणि ॥ भक्तैश्च दर्शनं दातुं याति मूर्त्तिमती शिवा । तथा लोकत्रये मूर्त्त्या क्रमात्सन्निहिता भवेदिति । ब्रह्मपुराणेऽपि । षष्ठ्यादौ कृष्णपक्षे तु भूमौ सन्निहिता भवेत् । यावत् पुनरमावास्यादिनानि दशनित्यशः ॥ १ ॥ शुक्लप्रतिपदारभ्य दिनानि दशनित्यशः । पाताले सन्निधानं तु करोति स्वयमेव हि ॥ २ ॥ शुक्लैकादशिकादीनि गङ्गास्वर्गतरङ्गिणी । पञ्चम्यंतानि सा स्वर्गे सदा सन्निहिता भवेदिति । अतएव नागेभ्यो गङ्गावरप्रदानं तेषां स्थलं गत्वा मूर्त्तिदर्शनात्मकमेवेति निश्चीयते । त्वया समग्रभावेन स्थेयं भारतखण्डके इति भगीरथप्रार्थनानन्तरं भगीरथमहाप्राज्ञ एवमेव भविष्यतीति गङ्गावरप्रदानदर्शनात् । किञ्च । यदि च जलप्रवाहगमनवरदानमेव चेद् गृह्यते तदपि एकांशेन कविजयदेवस्येच्छया तद्वाप्याविर्भाववदत्रापि ज्ञेयम् । तथापि नास्त्यत्र क्षतिरिति । किम्बहुना, द्रवरूपायास्तु भागीरथ्यायात्रा भगीरथपूर्वजोद्धारादनु प्रलयकालावृते कदापि न सम्भवतीति सिद्धान्त इत्यलं विस्तरेण ।

इति श्रीनन्दकिशोरशास्त्रिसूनु-दुर्गादत्तकृते श्रीगङ्गातत्त्वसन्दर्भे
चतुर्थं प्रकरणं समाप्तम् ॥ ४ ॥

---

चिद्द्रवस्यैव या शक्तिस्तदधिष्ठातृदेवता । वन्दे तां जाह्नवीं दिव्यां मकरासनसंस्थिताम् ॥१॥ अथ चाऽच्युतरामस्य मीमांसकशिरोमणेः । प्रपौत्रपुत्रजेनाम्बा मूर्त्तिभेदभ्रमोऽस्यते ॥ २ ॥ ननु च गङ्गायाः सगुणब्रह्मद्रवत्वं यदुक्तम् । तत्कथं सगुणब्रह्मद्रवतामगादिति तथाच तस्यैवाऽपरामूर्त्ति-

चतुर्भुजा मकरवाहना प्रोक्ता शास्त्रेषु श्रूयते च । उत्फुल्लामलपुण्डरीक-रुचिरा कृष्णेशविध्यात्मिका कुम्भेष्टाभयतोयजानि दधतीश्वेताम्बरालङ्कृता । हृष्टास्या शशिशेखराऽखिलनदीशोणादिभिः सेविता ध्येया पापविनाशिनी मकरगा भागीरथीसाधकैरित्यादिभिः श्लोकैः । सा किं निमित्तं जातेति । यदि च भक्तकार्य्यार्थमेवेति पूर्वमुक्तं स्वीक्रियते तत्तु स्मरणनामोच्चारणादिनैव भवितुं शक्यते इति सन्देहे जायमाने अत्रोत्तरः क्रमेणोच्यते । यथा निर्गुणस्य परमात्मनः स्वेच्छया * लीलाविनोदाय चिच्छक्तिमुपाश्रित्य निर्विकारसगुण-ब्रह्मत्वं प्रतिपाद्यते तथैव स्वेच्छयैव सगुणब्रह्मणो निर्विकार-नीराकारत्वं बोध्यम् । तत्तु भक्ताः संसारेऽध्यात्मादितापतप्तानां तापनिवृत्त्यर्थमेव मन्यन्ते । तथाच स्मर्य्यते । निराकारमुपासन्ते साकारमपि केचन । वयं संसार-सन्तप्ता नीराकारमुपास्महे इति । स्कान्देऽपि पार्वतीशिवसंवादेन जगद्-द्धारायैव जलाकारत्वं स्पष्टीकृतम् । तथाहि अक्षरं यत्परंब्रह्म यस्मिन् सर्व-मिदं ततम् । कथं तज्ज्ञायते लोके किं नाम तद्वद प्रभो ॥१॥ कथं ज्ञास्यन्ति चरमे युगे विप्रादयः परम् । तेषां भक्तिविहीनानां कथं कलियुगे गतिः ॥२ इति पार्वतीप्रश्ने सति । योऽसौ सनातनोदेवः परात्मा जगदीश्वरः । उवाच भक्तिसम्पन्नां सारात्सारतरं प्रभुः ॥ ३ ॥ परात्मा निर्गुणः शान्तो व्यक्तो-ऽव्यक्तो निराश्रयः । सर्वात्मा सर्वभूतेशः सत्यानन्दो निरञ्जनः ॥ ४ ॥ एक एव हि लोकात्मा सत्वादिगुणवर्जितः । तदेव परमब्रह्मजलात्मा भगवानजः ५ यत्ताम्बुनि महादेवि आपोरोचितदुर्गमे । ब्रह्माण्डकोटयो यस्मिन्ननन्ता ब्रह्म-कोटयः ॥ ६ ॥ उन्मज्जन्ति निमज्जन्ति जलब्रह्मण्यनेकशः । ब्रह्माण्डं प्रति-ब्रह्मादित्रयो देवाः सवासवाः ॥ ७ ॥ इतितद्ब्रह्मविज्ञेयमनन्तं विश्वतो-मुखम् । तदेव सर्वरूपेण ब्रह्माण्डेषु प्रवर्त्तते ॥ ८ ॥ यदेतत्परमं ब्रह्मद्रवरूपं महेश्वरि । गङ्गाख्ययापुण्यतमं पृथिव्यां मासकर्षिकम् ॥ ९ ॥ इति अन्यच्च तत्रैव काशीखण्डे सप्तविंशेऽध्याये । बहिःस्थितं जलं यद्वन्नारिकेलान्तरे स्थितम् । तथा ब्रह्माण्डबाह्यस्थं परंब्रह्माम्बुजाह्नवी ॥ २७ ॥ इति । भारते-ऽपि योऽसौ विश्वम्भरोदेवश्चित्स्वरूपीजनार्दनः । स एव द्रवरूपेण गङ्गाम्भो नात्र संशय इति । अथात्र ब्रह्मद्रवोत्पत्तिः प्रकारान्तरेण ब्रह्मवैवर्त्ते प्रकृति-

* एकोऽहं बहु स्यामिति श्रुतिदर्शनात् ।

खण्डे . दशमेऽध्याये श्रूयते श्रीराधाकृष्णयोः कार्त्तिक्यां रासमण्डले शिवो जगाम । एतस्मिन्नन्तरे शम्भुर्ब्रह्मणा प्रेरितो मुहुः । जगौ श्रीकृष्णसङ्गीतं रासोल्लाससमन्वितम् ॥ १५३ ॥ मूर्च्छां प्रापुः सुराः सर्वे चित्रपुत्तलिका यथा । क्षणेन चेतनां प्राप्य ददृशू रासमण्डलम् ॥ १५४ ॥ स्थलं सर्वं जलाकीर्णं राधाकृष्णविहीनकम् । अत्युच्चै रुरुदुः सर्वे गोपागोप्यः सुरा द्विजाः १५५ ध्यानेन ब्रह्मा बुबुधे सर्वमेवमभीप्सितम् । गतश्च राधया सार्द्धं श्रीकृष्णो द्रवतामिति ॥ १५६ ॥ ततस्तैरभिष्टुतः सराधः श्रीकृष्णः स्वदर्शनं च ददावित्यादि तत्र विस्तरतोऽस्ति । तथा देवीपुराणेऽपि । शिवसङ्गीतसंमुग्धश्रीकृष्णाङ्गसमुद्भवाम् । राधाङ्गद्रवसंयुक्तां तां गङ्गां प्रणमाम्यहम् ॥१॥ इति । तथाचैवं नारदकृतगानतोऽपि श्रूयते एकदा नारदः सरस्वत्याः सकाशाद्गानविद्यामधीत्य दर्पितो मुनिर्ब्रह्मलोकं गत्वा पितरं नत्वोवाच श्रूयतां मद्गीतं नादतत्त्वं समीचीनं वाऽसमीचीनमिति श्रुत्वा च मम श्रवणावकाशो नास्तीति हसन् कपर्दिनं प्रति प्रेषितः सः शिवमपि तथैवोवाच ततस्तेनापि विष्णुं प्रति प्रेषितः ततो विष्णुनापि ब्रह्मशिववदुक्त्वा कृपया गोलोके प्रवेशितः तत्र चानेकब्रह्माण्डाधिनाथं दृष्ट्वा नत्वा स्वाभिप्रायं निवेदयित्वा तदाज्ञतः सभेदं रागनिकरं जगौ ततश्च तद्गीतियन्त्रितचित्तः कृष्णो द्रवतामगादिति । एतच्च कल्पान्तरभेदेनेत्यूह्यम् । यद्वा केनचिद्धेतुना भक्तानां प्रीतये प्रलयाभावेऽपि मार्कण्डेयाय दर्शितमायावत्तदपि सम्भवतीति नात्र विरोध इति तत्त्वमवधेयम् १ अथ चिद्द्रवस्याऽपरामूर्त्तिः किन्निमित्तं जातेत्यत्रोच्यते कल्पाधिकारिणां देव-नक्षत्र-नग-सिन्धु-नद्यादीनां च मूर्त्तिद्वयं भवति । तत्राद्यया तु स्वाधिकारस्थले स्थित्वैवेश्वराज्ञा क्रियते एव तथाप्यवान्तरकार्य्यविशेषेषु प्रभोरिच्छयैवाऽपरया मूर्त्त्या तानि क्रियन्ते इति । उक्तञ्च नारदाद्यैः । आद्यामूर्त्तिस्तु देवानां स्वीये धाम्नि विराजते । तस्याः सकाशादुत्पन्ना द्वितीया कार्य्यसाधिका ॥ १ ॥ कार्य्यं विधाय तत्पश्चात् स्वाधिष्ठाने विलीयते । तथापीश्वरमूर्त्तीनां नित्यत्वन्न विरुध्यते ॥ २ ॥ नित्यत्वाद्ब्रह्मण एवास्य कालातीतत्वतस्तथा । कालस्यापि नियन्तृत्वात्परत्वात्प्रकृतेरपि ॥ ३ ॥ इत्यादिना यथा सूर्य्यादीनां कल्पाधिकारे स्वे नित्यमूर्त्त्या स्थितिर्नित्यैव तथापि कार्य्यविशेषेषु अत्रि-कश्यपादिगृहे मूर्त्तिभेदेन प्राकट्यं श्रूयत एव तथाहि श्रीभागवते

चतुर्थे । सोमोऽभूद्ब्रह्मणोऽंशेनेति । विवस्वानर्य्यमापूषेति षष्ठस्कन्धवाक्येन च एवञ्च कृत्तिकादीनि नक्षत्राणीन्दोः पत्न्यस्तु भारतेति षष्ठस्कन्धवाक्येनैवाऽश्विन्यादिनक्षत्राणामपि मूर्त्तिद्वयं दृश्यते तथा मेर्वादिपर्वतानामपि पृथुकृतपृथ्वीदोहने । गिरयो हिमवद्वत्सा नानाधातून् स्वसानुषु इति भागवतचतुर्थस्कन्धेऽस्ति मैनाकेन तु मूर्त्तिमता समुद्रोत्प्लवने हनुमतः स्वशिखरे स्थित्वा कपेः सत्कारः कृतः संवादश्च वाल्मीकीय रामायणे प्रसिद्ध एव । एवं समुद्रेणापि मूर्त्तिमता राघवेन्द्रः प्रपूजितः । सिन्धुः शिरस्यर्हणं परिगृह्यरूपी पादारविन्दमुपगम्य बभाष एतदिति भागवतनवमस्कन्धे दशमाध्यायवाक्येन सिन्धोर्मूर्त्तिद्वयं भाति तथैव तत्रैवाष्टमस्कन्धेऽष्टमाध्याये रमाभिषेके । मूर्त्तिमत्यः सरिच्छ्रेष्ठा हैमकुम्भैर्जलं शुचि । इति वाक्येन नदीनां च मूर्त्तिभेदः प्रसिद्धः । तथा पाद्मीये भागवतमाहात्म्ये तृतीयेऽध्यायेऽपि । वेदान्तानि च वेदाश्च मन्त्रास्तन्त्राः समूर्त्तयः । दशसप्तपुराणानि षट्शास्त्राणि तथाऽऽययुः १५ गङ्गाद्याः सरितस्तत्र पुष्करादि सरांसि च । क्षेत्राणि च दिशः सर्वा दण्डकादिवनानि च ॥ १६ ॥ नगादयो ययुस्तत्र देवगन्धर्वकिन्नरा इत्यादि । अन्यत्र च पुराणेषु लेखोऽस्त्यत्र विस्तरभयान्न प्रलिख्यते किंबहुना । यथा । नद्यस्तदा तदुपधार्य्य मुकुन्दगीतमावर्त्तलक्षितमनोभवभग्नवेगाः आलिङ्गनस्थगितमूर्मिभुजैर्मुरारेर्गृह्णन्ति पादयुगलं कमलोपहारा इति भागवतदशमस्कन्धवाक्येन श्रीयमुनायाः प्रवाहरूपेण साक्षाद्व्रजमण्डले श्रीकृष्णलीलासुखं प्राप्ताया अपि पुनः द्वारकालीलाविनोदाय । कालिन्दीति समाख्याता वसामि यमुनाजले इति कालिन्दीनाममूर्त्त्या तपः कृत्वा पट्टमहिषीषु स्थितिर्दृश्यते तथैव सगुणब्रह्मद्रवस्याप्यन्या मूर्त्तिः द्रवाधिष्ठातृत्वेन प्रसिद्धा पुनर्वैकुण्ठादिषु । गङ्गा-सरस्वती-लक्ष्मीश्चैतास्तिस्रः प्रियाहरेरित्यादिवाक्यदर्शनात् तल्लीलाविनोदायैवेति । तथा कार्य्यविशेषेषु भक्तानां कल्याणाय दृढ़विश्वासाय च द्रवरूपेण लोकत्रये व्याप्तापि पुनश्च विष्णुलीलासाहाय्यार्थं विशेषपतितोद्धारार्थं च विष्णुवदवताराणि सैव धत्ते भक्तादीनां शापानुग्रहकारिणीति तत्त्वमवधेयम् । ननु तल्लीलाविनोदायैवेति यदुक्तं तन्न संघटते तस्यास्तदन्यत्रापि रूपान्तरेण प्रवृत्तिदर्शनात् तथाहि वाल्मीकिविरचितश्रीगङ्गाष्टके । मातः शैलसुतासपत्नि वसुधाशृङ्गारहारावलि इति वाक्येन पार्वतीसपत्नीत्वेन

शिवस्यापि भार्य्या गङ्गेति सूच्यते । तथाच कल्किपुराणे तृतीयेऽंशे । महाभिषन्तपाङ्गना हिमगिरीशकूटस्तनी सफेनजलहासिनी सितमरालसञ्चारिणी चलल्लहरि-सत्करावरसरोज-मालाधरारसोल्लसित-गामिनी जलधिकामिनी राजते। इति मुनिभिः कृतगङ्गास्तवोक्तेः एवं भागवतप्रथमस्कन्धे एकोनविंशेऽध्याये परीक्षिच्चरिते। इति स्मराजाध्यवसाययुक्तः प्राचीनमूलेषु कुशेषु धीरः। उदङ्मुखोदक्षिणकूल आस्ते समुद्रपत्न्याः स्वसुतन्यस्त भारः । इति वाक्येन तथा तत्रैव नवमस्कन्धे विंशेऽध्याये। शलय शन्तनोरासीद्गङ्गायां भीष्म आत्मवानिति वाक्येन च समुद्रशन्तनुभार्य्यात्वेन निर्दिष्टेति कष्टपाय इति । अत्र समाधानं न च वाल्मीकिकृतगङ्गाष्टकोक्त्या शिवभार्य्या गङ्गेति वाच्यम् । तत्र गङ्गातरङ्गाणां शिववामाङ्कस्थिताऽम्बा शृङ्गारचालनकर्तृत्वेन । सपत्नशब्दस्य शत्रुतापरत्वात् । अथच । सरसामस्मि सागर इति भगवदुक्त्या तद्विभूतित्वे सति गङ्गायाश्च तद्रूपत्वेन नदीरूपायास्तद्भार्य्यात्वे न हानिः एवं च हरिवंशे विष्णुपर्वणि त्रिपञ्चाशत्तमेऽध्याये इन्द्रादिदेवविरञ्चिसंवादे। भूयश्चैव मया शप्तः समुद्रः सह गङ्गया। सकारणां मतिं कृत्वा युष्माकं हितकाम्यया २३ यस्मात्त्वं राजतुल्येन वपुषा समुपस्थितः। गच्छार्णवंमहीपालो राजैवत्वं भविष्यसि ॥ २४ ॥ तत्रापि सहजां लीलां धारयन् स्वेन तेजसा । भविष्यसि नृणां भर्त्ता भारतानां कुलोद्वहः ॥ २५ ॥ शान्तोऽसीति मयोक्तस्त्वं यच्चासितनुतां गतः। सुतनुर्यशसा लोके शन्तनुस्त्वं भविष्यसि ॥ २६ ॥ इयमप्यायितापाङ्गी गङ्गा सर्वाङ्गशोभना। रूपिणी च सरिच्छ्रेष्ठा तत्त्वत्वामुपयास्यति ॥ २७ ॥ इति ब्रह्मवाक्येन शन्तनोरपि समुद्रांशेनावतीर्णस्य भार्य्या गङ्गांशरूपा जाता इत्यादि सर्वंमनवद्यमिति विभायन्तु सुधिय इति शिवम् ।

इति श्रीनन्दकिशोरशास्त्रिसूनुकृते श्रीगङ्गातत्त्वसन्दर्भे
पञ्चमं प्रकरणं समाप्तम् ।

---

महिमा राजते यस्याः सदा प्रत्यक्षमेव हि । तथाप्यऽज्ञानपश्यन्ति वन्दे तां सूर्य्यनिम्नगाम् ॥ १ ॥ अथ गङ्गाप्रतापानि प्रलिख्यन्ते समासतः । ततोऽन्तिमे कलौ यात्रा यथाक्रममुदीर्य्यते ॥ २ ॥ तत्र तावत्तु सहस्रतमेऽन्तिमे कलौ श्रीभागीरथीयात्रां वक्तुम् अधुना पूर्वोक्तश्रुतिस्मृतिपुराण-

वाक्यसन्दर्भेष्वपि नूनमविश्वसितानां केषाञ्चिदल्पमतीनां गङ्गाभक्तिप्रवर्त्तन-पूर्वकमाकल्पमव्याहतदृढनिश्चयाय श्रीजाह्नवीजलस्यैते सदा विद्यमानानि भूमण्डले प्रसिद्धानि लोकोत्तरचमत्कारकारकस्य प्रतापस्य विलक्षणानि लक्षणानि प्रदर्श्यन्ते संगृहीतैः कतिपयैः श्लोकैः। यथा। भूमण्डलस्थपानीया-द्विशेषो जाह्नवीजले धृते जले कृम्यभावः प्रथमं लक्षणं विदुः ॥ १ ॥ इति तु सरितां वाऽन्यक्षुद्रप्रवाहप्रस्रवणादीनां सङ्गमस्थलं विहायान्यत्र धृते श्रीगाङ्ग एव बोध्यम्। एवमग्रेऽपि लिख्यमानेषु वाक्येषु व्यवस्था ज्ञेया। चिरं कालस्य पात्रेषु धृता आपोक्कसन्ति वै। गाङ्गं जलं तु न तथा द्वितीयं लक्षणं विदुः ॥२ कूपादिनीरमस्वादु भवत्येव चिरं धृतम्। गाङ्गं जलं तु न तथा यथा पूर्वं तथा धृतम् ॥३॥ इति तृतीयं०। दुर्गन्धितं धृतं नीरं चिरं कूपादिकोद्भवम्। न तथा जाह्नवीतोयं चतुर्थं लक्षणं विदम् ॥ ४ ॥ चिरशब्दोऽत्र बहुदिन-स्थित्यपेक्षयाऽनुमीयते इति। वर्षान्तरं मलिनता भवत्येव धृते जले। न तथा भीष्मसू तोये पञ्चमं लक्षणं विदम् ॥ ५ ॥ धृते जले ह्यूर्णनाभि जाला-कृतिनिभं मलम्। भवत्येव हि पात्रेषु न कश्चिज्जाह्नवीजले ॥ ६ ॥ इति षष्ठं०॥ तैलविन्दुनिभं लक्ष्म जायते सर्ववारिषु। स्थापितेषु चिरं पात्रे जाह्नव्यप्सु न कर्हिचित् ॥ ७ ॥ इति सप्तमं०। गङ्गानीरप्रवाहस्य प्रकाशो जायते निशि। कृष्णायां व्योम्नि मेघाढ्ये नान्याऽपां स्याद्दर्शनम् ॥८॥ अयं भावः कृष्णपक्षरात्रौ गगने मेघाच्छादितेऽन्धकारस्याऽऽधिक्येऽपि गङ्गाप्रवाहस्य प्रकाशो भवति दर्शनं च। तथान्यनदीप्रवाहस्य न भवतीत्यष्टमं लक्षणम् ॥८ गङ्गाप्रवाहमध्ये तु मुक्तामालाकृतिर्निशि। दृश्यते साधुभिर्नैव परदाररतैः खलैः ॥ १ ॥ कृते स्नाने तु गाङ्गेषु लोकन्ते पापिनोऽपि ताम्। कृष्णरात्रि निशीथेऽपि गगने जलदाकुले ॥ ९ ॥ इति नवमं०। जले वातादिदोषाणा-मभावो जाह्नवी भवे। स्पष्टं भिषग्भिरपि वा धातुः शास्त्रे विलोकितम् १० इति दशमं०। अभावे ह्यनुपानस्य गङ्गाम्भोदीयतेऽगदः। ददते तद्गुणं तास्य स्फुटमेतज्जगत्त्रये ॥ ११ ॥ इत्येकादशं०। विधिना सेवनेनैव रोगशान्ति कृदौ-षधम्। गङ्गातोयं तु सर्वत्र किमन्याऽगदसंग्रहैः ॥ १२ ॥ अत्र विधिस्तु पाक-सिद्धिपानस्नानादिष्वपेक्ष्यते। अथ गाङ्गस्याऽगदत्वे आथर्वणीश्रुतिश्च हिमवतः प्रस्रवन्ती सिन्धौ समहसङ्गमः। आपोऽहमस्य तद्देवीरिदम् हृद्द्योतभेषज-

मिति । एतदर्थश्च । हिमवतः पर्वतात् प्रस्रवन्ती प्रस्रवन्त्याः प्राकट्यं कुर्वन्त्याः यस्याः सिन्धौ समहसङ्गमः समुद्रेण साकं यस्याः सङ्गमोऽस्तीति भावः । सा गङ्गा तत् सर्वशास्त्रेषु लोकेषु वा प्रसिद्धाः देवीः प्रकाशमानाः आपः अपः जलानि मह्यं ददत् ददातु कीदृशा अपः हृद्योतभेषजं हृदयप्रकाशकौषधं यद्वा हरति गदानि इति हृत् द्योतं प्रसिद्धभेषजमिति द्वादशमं लक्षणम् । हरिद्वारात्तु वायव्ये शुद्धे भागीरथाम्भसि । मौक्तिकाभं पयो यत्र न स्यान्नी-लीनिभं क्वचित् ॥ १३ ॥ इति त्रयोदश० । अन्यनद्यादिनीरस्य सङ्गमेन विव-र्जिते । शुद्धे गङ्गाप्रवाहे तु शैवालं नैव जायते ॥ १४ ॥ इति चतुर्दशमं० । तद्वदेव हि गाङ्गेये पूकोत्पत्तिर्न जायते । केचिदेतद्धि गृह्णन्ति शुद्धे भागी-रथाम्भसि ॥१५॥ इति पञ्चदश० ॥ गङ्गास्नाने कृते पश्चात्प्रस्वेदो जायते यदि । तनौ दुर्गन्धितो न स्यादित्येवं गाङ्गजं महः ॥ १६ ॥ इति तु कूपादिजलेन पुनः स्नानात्पूर्वमेव ज्ञेयं तथाच स्नाने विधिरपेक्ष्यते इति षोडश० । गङ्गो-द्गमस्थानजलं तुलायामपि तोलितम् । कृतमस्वर्णखण्डस्य पाततो नैति हीनताम् ॥ १७ ॥ अत्रैवंविधिः गङ्गोत्तरीयं जलं तुलायां द्वित्रिपलमितं संतोल्य शुद्धे पात्रे स्थापयेत् ततः सुवर्णमुद्रां वा सुवर्णाङ्गुलीयं वह्नौ सुसन्ताप्य पात्रस्थिते तस्मिन्नेव जले पातयेत् ततः स्वर्णमुद्राऽङ्गुलीयकं वा तु शीतलतां याति किन्तु तज्जलमुन्मानितं न ह्रासमेति । एतत्तु मथुरा प्राक् चतुः-क्रोशखेरायाख्ये ग्रामे गुरुकुले विद्याध्ययनसमये श्रीमन्नैष्ठिकब्रह्मचारिभिः श्रीहरिनारायणशर्म्मभिर्मद्गुरुभिरेव केनचिद् ब्राह्मणेनानीतं जलं विधिना तप्तस्वर्णाङ्गुलीयकपातेन परीक्षितं मया दृष्टम् इति सप्तदशमं० । दक्षिणप्रान्त-देशेषु काञ्चोजि जाङ्गलादिषु । भवत्यनन्तनीरस्य पानादुद्गमनं मखे ॥ १८ ॥ अत्र गङ्गायात्रा जलानयनविधेरावश्यकताऽस्ति अत्रेयं रीतिः । उक्तदेशेषु गङ्गा-यात्रः गङ्गोट इति तद्देशेषु ख्यातः तत्रत्यैर्जनैः श्रीगङ्गायां स्नात्वा गृहे गत्वा च क्रियते तत्र हवनादनु कस्मिंश्चित्कांस्यादिपात्रे सकाचपात्रं गङ्गाजलं स्थाप्य मन्त्रैः प्राकृतैर्वा श्लोकैर्भागीरथीं स्तुवन्ति तदा तुष्टा जाह्नवी काचपात्राज्जलो-द्गमनं करोतीति प्रसिद्धमेवैतदित्यष्टादशमं० । तृषः शान्तिर्जले पीते भवत्येव स्फुटं भुवि । गांगस्य पानमात्रे तु क्षुदभावः क्षणान्तरम् ॥ १९ ॥ इत्येकोन-विंशकं० । पीते गंगोद्भवे तोये शान्ताबुद्धिस्तु तत्क्षणे । सत्त्वोद्गमश्चित्तशुद्धि-

भवतीति महोऽद्भुतम् ॥ २० ॥ इति विंशति० । पीते गांगे तदैवाशु श्रीहरिस्मरणं हृदि । स्वाभाविकं प्रजायेतेत्येवं गंगोद्भवं महः ॥ २१ ॥ इत्येकविंश० । श्रीकौथुमीय शाखोक्तजाह्नवीमन्त्रपाठतः । गङ्गातरङ्गोच्छलनं जायते हर्षकारकम् ॥१॥ तटस्थपाठकस्यास्ति गाङ्गप्रसरणं तथा । अन्यत्रापि हि पाठेन पातालादुद्गमनं त्वपाम् ॥२२॥ इति द्वाविंशति० । चातुर्थिकज्वरान्मुक्तो भवतीति स्फुटं भुवि । गङ्गाप्रवाहस्नातेति कथमेव न चाद्भुतम् ॥१॥ अपेक्ष्यते विधिस्त्वत्र गायत्रीजपपूर्वकः । पूर्वं ज्वरागमनतो गाङ्गमध्यस्थितिस्तथा ॥ २३ ॥ इति त्रयोविंशति० । प्रत्यहं गाङ्गपानेन मुखगन्धं विनश्यति । तदौषधिस्त्विति नृणामित्येवं गाङ्गलक्षणम् ॥ २४ ॥ इति चतुर्विंशति० । अत्रापि विधेरावश्यकता, गङ्गाजलेन रचिता पाकसिद्धिर्विलक्षणा । सुस्वादूरोगरहिता भवतीति महो न किम् ॥ २५ ॥ इति पञ्चविंशति० । प्रेतादिजनिता बाधा गङ्गास्नानेन नश्यति । ते च भीता भवन्तीति यत्र तत्र प्रदृश्यते ॥ २६ ॥ इति षड्विंशति० । अत्रापि विधेराग्रह एवमेवाग्रेऽपि बोध्यम् । कृते स्नाने तदैवैषदामोदो जायते तनौ । धियासनोपमेयः स्यात्तदऽलौकिकभावतः ॥ २७ ॥ इति सप्तविंशति० । नित्यं गाङ्गस्य पानेन तथा तद्रेणुलेपनात् । तनोः कुष्ठामयो नूनं क्षीयते नात्र संशयः ॥ २८ ॥ इत्यष्टाविंशति० । कूपाद्यापः कृमियुता जाह्नवीजलपाततः । शुध्यन्ति चैतद्गङ्गायास्तेजोलोकोत्तरं न किम् ॥ २९ ॥ इत्येकोनविंशत्० । अत्र नास्ति विधेराग्रहः ॥ गाङ्गैर्गङ्गारजः पिण्डं कृत्वा कण्ठे निबन्धनात् । पिशाची बाधयामुक्तो नितरां जायते शिशुः ॥ ३० ॥ अत्र मृत्पिण्डकरणं विधिना स्नात्वा सम्प्रार्थनं सप्तम्यां रविदिने । वा कुह्वां चन्द्रदिने मध्याह्ने श्रीविष्णुपदीपूजनानन्तरं विधीयते पुरुषसूक्तपाठं वा गङ्गासूक्तपाठं तदा कुर्यात् । इति त्रिंशत्० । जन्मान्तरे ब्रह्महत्याकरणात् कच्छपीगदः । जायते चोदरे नृणां गाङ्गपानाद्विनश्यति ॥३१॥ इत्येकत्रिंशत्० । तथा च खर्परीरोगो नृणां कुक्षौ प्रजायते । गङ्गारजो भक्षणेन दिग्दिनैः सोऽपि नश्यति ॥ ३२ ॥ रजोभक्षणमत्र प्रातः सायं च शयनसमये पलार्द्धमितं ज्ञेयम्, इति द्वात्रिंशत्० । गङ्गाजलेन मृत्पिण्डं विधाय स्थापयेद् बुधः । कालान्तरेऽप्यश्नतो मुखे स्वादुसुगन्धकृत् ॥ ३३ ॥ इति त्रयस्त्रिंशत्० । वृक्षेषु यत्र जायेत बन्ध्यात्वं पुष्पबन्धनम् । तच्च नश्यति

जाह्नव्या जलसिञ्चनमात्रतः ॥ ३४ ॥ इति चतुस्त्रिंशत्०। किं बहुना इत्याद्यनन्तलक्षणप्रतापवत्याः श्रीभागीरथ्याः पयसि यदा उक्तलक्षणाऽभावः स्यात्तदैव भागीरथ्याः स्वधामगमनम् बोध्यमिति सिद्धान्तः। एतत्त्वेवान्तिमे कलौ भविष्यतीत्यपि च विशेषतो दर्शयितुं श्रीगङ्गायायात्राकालक्रमः पूर्वत एव प्रलिख्यते। अन्तिमे कलौ तावदेव सार्द्धद्विसहस्राब्दमिते काले सति ग्रामाधिष्ठातृदेवतागमन आपन्ने ग्रामेषु विग्रहादिविघ्नाः द्रक्ष्यन्ते ततो ग्रामदेवतानां स्वगम्यपदयात्रा भविष्यति ततश्च ग्रामादिलुण्ठनं वह्निदाहश्च पुनः पुनः प्रवर्त्स्यंते तथा मारीप्रभृतिरोगोत्पत्तिश्चेति तस्मिन्नेव काले काशीस्थशिवलिङ्गानां पाताल*यात्रा भविष्यति तदुक्तं सनत्कुमारसंहितोक्तकार्त्तिकमाहात्म्ये द्वाविंशेऽध्याये प्राप्ते कलियुगे घोरे शौचाचारविवर्जिते तत्वसंख्येवर्षशतैर्गतैर्देवो महेश्वरः। वाराणसीस्थलिङ्गानि पाताले स हि नेष्यति ॥३६॥ इति ततश्च काशीलोपकालपर्य्यन्तं लिङ्गचिह्नमात्रमेव यत्र तत्र स्यास्यति एवं च सति चतुःसहस्राब्दमिते काले पर्वतस्थदेवताः स्वगम्यस्थलं गमिष्यन्ति इत्यपि तत्रैवोक्तं, चतुर्वर्षसहस्रैस्तु शैलस्थाः सर्वदेवताः। सत्तां त्यक्त्वा गमिष्यन्ति मानसञ्च सरोवरम् ॥ ४२ ॥ इति एवं सति पञ्चसहस्राब्दमिते काले आपन्ने सति भुवि दिव्यन्तरिक्षे च भूकम्पादयस्त्रिविधा उत्पाता भविष्यन्ति तस्मिन्नेव काले वाराणसी अन्तर्द्धानं गमिष्यति एतदपि तत्रैवोक्तं, ततो द्विगुणवर्षैस्तु गङ्गावाराणसी तथा। भविष्यति ह्यदृश्या सा सत्यन्तु मुनीश्वर ॥ ३७ ॥ ततो द्विगुणवर्षैरिति ग्रामदेवतायात्राकालाभिप्रायेणैवोक्तमिति ज्ञेयं ततश्च, अन्तर्हिता यदा काशी भविष्यति महामुने। नाशः स्याल्लिङ्गचिह्नानां निःप्रभा सकला जनाः ॥ ३८ ॥ चतुर्दशेषु दुर्भिक्षं महामारीसमुद्भवः। गोवधश्चापि सर्वत्र मृत्तिकाभस्मसन्निभा ॥ ३९ ॥ तदैव च। गङ्गाद्वारात्तु या धारापतेद्भागीरथाश्रमे। हरिद्वाराच्च वायव्ये तस्यालोपो भविष्यति ॥ ४० ॥ अत्र प्राकृतनदीवत् श्रीगङ्गानाशो न बोध्यः किन्तु विष्णुवद्वैकुण्ठयात्रैवेति ज्ञेयम् उक्तञ्च ब्रह्मवैवर्त्ते कृष्णजन्मखण्डे कृष्णवाक्यं, स्वयं च देवीवैकुण्ठे वेष्टयित्वास्ति सन्ततम्। तस्या विनाशः प्रलये नास्त्येव हि यथा मम इति। लोमशसंहितायान्तु, गङ्गायात्राकालस्तिथिवारात्मकोप्युक्तः।

* शेषान्तिके प्रलयाभावाभिप्रायेण।

माघमासे सिते पक्षे द्वादश्यां भृगुवासरे। पञ्चपञ्चाशत्तमेऽब्दे गङ्गालोपो भविष्यति ॥ १ ॥ ततः परं नर्मदायामाहात्म्यं भविता भुवीति ॥ १ ॥ अन्तिमे काले तदानीन्तनशकेशवर्षाभिप्रायेण पञ्चपञ्चाशत्तमेऽब्दे इत्युक्तम्। ये तु इदानीं वैक्रमशक एव विश्वसितास्तेऽविचारिणः उपहास्याः अत्र श्लोके वै क्रमशकसम्बन्धकथनाऽभावात् अन्यत्र च। शरैः पञ्चभिरङ्कचन्द्रे मिताब्दे भृगौ माघमासे सिते द्वादशेऽह्नि। भवेद्वामयुग्मे चतुर्थे च लग्ने यदा स्यात्तदा देवनद्या विलोप इति। तस्मिन्नेव दिने गोवर्द्धनादीनां यात्रा च पुराणान्तरे श्रूयते। माघमासे सिते पक्षे एकादश्यां भृगोर्दिने। श्रीमद्गीता च गायत्री-गोवर्द्धनगिरिस्तथा ॥ १ ॥ गुरुगोविन्दभक्तिश्च तुलसीपूजनं तथा। शालिग्रामः सामगानं गङ्गया सह नश्यति ॥ २ ॥ इति अत्र पूर्वयोर्वाक्ययोर्द्वादशीग्रहणं कृतम् अपरवाक्ये एकादशीग्रहणं न विरुध्यते वैष्णवानां मते पूर्वविद्धाभयादेकादशीव्रतस्य द्वादशीपरत्वं वर्त्ततेऽतस्तद्भावेनात्रापि एकादशीशब्देन द्वादशीग्रहणमिति बोध्यम्। किञ्च यावद्भागीरथी गङ्गा तावद्वेदाः कलौ युगे इति वाक्यात्तदानीमेव वेदा अपि ब्रह्मलोकं प्रयास्यन्ति तदानीं सर्वेषां पुष्करादितीर्थानां यात्रापि सनत्कुमारसंहितायां कलेर्दशसहस्रान्ते इति श्लोकाग्रिमे श्लोके निगदिता यावत्तिष्ठति गङ्गा च तावत्तीर्थानि सन्ति च। यदैवाऽदृश्या गङ्गा स्यात् को वाऽस्मत्पापमाहरेत् ॥२५॥ विचार्य्यैवं सुतीर्थानि गमिष्यन्ति धरातलादिति एवं तदैव श्रीयमुनायाः प्रतीचीसरस्वतीप्रभृतीनां गङ्गानां यात्रा च भविष्यति उक्तञ्च पुराणेषु पाद्मादिषु। गङ्गा च यमुना चैव सरयूश्च सरस्वती। शतभागा चन्द्रभागा रम्या सिन्धुर्महानदी ॥ १ ॥ सर्वास्ताः प्रलयं यान्ति वर्जयित्वा तु कल्पगामिति। प्रणष्टद्वादशादित्ये प्रलये समुपस्थिते। सरितश्च लयं यान्तु गङ्गाद्याश्च सहस्रशः ॥१॥ नर्मदे तिष्ठ देवि त्वं सप्तकल्पानुगामिनी इति तदानीन्तने कलावेव गंगायात्रामनु नर्मदाया एव माहात्म्यप्राधान्यम् अधुना तु सर्वतीर्थवत् स्वशक्त्यनुसारेण तस्या अपीति ज्ञातव्यं तथा च गङ्गामनुसप्तकल्पपर्य्यन्तं नर्म्मदामाहात्म्यप्राधान्यनियमः सप्तकल्पानुगामिनीति वाक्येन सूच्यते, अथ तदानीं गङ्गायात्रासूचकलक्षणानि प्रदर्श्यन्ते सनत्कुमारसंहितायां भागीरथ्यां गतायान्तु मर्कटीतन्तुसन्निभाः। भविष्यन्ति तदा कीटास्तोयं नीलीनिभं तथा ॥ ४१ ॥ इति अन्यत्र च श्रूयते

सूत्राकारास्तु कलयो भविष्यन्ति धृते जले । यदा यास्यति स्वं धाम गङ्गा स्वर्गा सरीतलम् ॥१॥ काचपात्रे धृतं तोयं क्रमशो क्षयमेष्यति । अस्वादु-किञ्चिन्मलिनं भविष्यति तदा तथा ॥ २ ॥ गङ्गोद्गमस्थानजलं तुलायामिव तोलितम् । तत्समुद्राग्रपातेन किञ्चिद्ध्रासमवाप्स्यति ॥३॥ किञ्च, ततो नदी-प्रवाहस्तु किञ्चित्कालं घटिष्यति । ततःपरं हि स्नातेन खण्डितः सोऽपि नंक्ष्यति ॥ ४ ॥ किन्त्वद्धा दैनन्दिनप्रलयकालम्विना सख्ये नास्ति भागी-रथीयात्रेति शास्त्रसिद्धान्त इति शिवम् । अनेन मन्मुखोत्थव्याख्यानेनाऽपि तेन तु । जगदात्मा परब्रह्म नीराकारं प्रसीदतु ॥ १ ॥ कृष्णऽभिनवभूवर्षे वैक्रमे तीर्थनायके । माघ्यां पूर्वे निशानाथे वदषि ब्रह्मवादिनाम् ॥ २ ॥ श्रीगङ्गयैव कृपया सन्दर्भोऽयं प्रकाशितः । निमित्तमात्रं व्याख्यानेऽज्ञोऽप्यहं हि कृतोऽन्यथा ॥३॥ किञ्च, श्रीशाण्डिल्यकुलाऽम्बुदन्ततरणिः श्रीसामवेदार्थ-विज्ञानोक्षोहरिवंश इत्युत भुवि ख्यातिं गतः पण्डितः । तस्माज्जर्मधुरन्धरः कविवरो दामोदराख्यो ह्यऽभूत्तत्सुतो भगवान् क्षितीन्द्रमुकुटैः संपूजितांघ्रिः कविः ॥४॥ तत्पुत्रोऽभयराम उज्ज्वलगुणो मीमांसकस्तत्सुतो नाम्ना देवमणिः कवीन्द्रतिलकः सद्दीपिकाकारकः । तत्सूनुः कुलहव्यसेवनकरो वेदार्थनिष्ठापरः काशीराम उवाच यः कविमुदे वेदस्तुतौ दर्पणम् ॥ ५ ॥ तत्पुत्रः कविरामदत्त उदितो ज्योतिर्विदां भूषणस्तस्मान्नन्दकिशोर उत्तमयशा जातो मदीयः पिता । दुर्गादत्त इमां कृपामधिगतः सोऽहं तदङ्घ्र्यर्चको याचेऽस्मिन् यदि किञ्चिन्न्यूनमधिकं तच्छोधयन्तूत्तमाः ॥६॥ निजं निरञ्जनं नित्यं निर्मलं निरुप-द्रवम् । चतुर्वर्गचयं सेतुं चेतश्चिन्तयचिद्द्रवम् ॥७॥

इति श्रीवृन्दावननिवासि द्विवेदिनन्दकिशोरशास्त्रिजकृते श्रीगङ्गातत्त्वसन्दर्भे

षष्ठप्रकरणम् ॥ समाप्तोऽयं सन्दर्भः ।

---

सत्पूर्वजानां मथुरोपसंस्थे रायाख्य आसीच्चिरतो निवासः ।
वृन्दावनेऽहन्तु वसामि तत्र सन्दर्भलब्धिर्भवितेच्छुकानाम् ॥ १ ॥

श्रीवृन्दावनवासि श्री नन्दकिशोर शास्त्रिजी के ज्येष्ठपुत्र दुर्गादत्त जीने गङ्गातत्त्वसंदर्भ नाम से जो ग्रन्थ किया हैं उस का संक्षेप करता हूं। इस कलि के ५ हजार वर्ष के बाद गङ्गा न रहेगी। यह समझना ठीक नहीं है क्योंकि कलियुग में गङ्गा कहनेवाले शास्त्रवाक्य किसी कलि की संख्या नहीं कहते हैं इससे जिसमें प्रलय होगा वुह अन्त्यका हजार वां कलि समझना सो वड़े विष्णुपुराण में लिखा है पृथ्वी गङ्गा से हीनअन्त्य के कलियुग में होगी। सो यही ऋग्वेद के ७ अष्टक २ अध्याय १८ वर्ग २० वी ० परिशिष्ट श्रुति—और ऋग्वेद के ही ८ अष्टक ३ अ० ६ वर्ग की १ परिशिष्ट श्रुतियों से हमेश गङ्गास्थिति भूमि पर है यह इस ग्रन्थ में साबित है विद्वान समझ लेंगे। और प्रायश्चित्त तत्व—ग्रन्थ में लिखा है। श्री गङ्गाजीने भगीरथ से प्रतिज्ञा की है जब तक भूमि पर तुलसी पूजी जायगी। और आकाश में वृहस्पति स्वर्ग में कल्पवृक्ष समुद्र में वड़वानल वसेंगी तब तक में तेरे इस रथचक्र के गर्त में वसुंगी ऐसे और भी संशोधन तत्व भारतदानधर्म वाल्मीकि रामायण ब्रह्माण्ड पुराण के वाक्यों से भूमि पर हमेशा गङ्गाका रहना सूचित है। वे वाक्य इस ग्रन्थ में लिख दिये हैं—और दूसरे प्रकार से भी समझना चाहिये जो अब कलियुग के इस सन्ध्यांश में ही गङ्गा जाती तो कलियुग में पदार्थ चतुष्टय देनेवाली गङ्गा को पुराण क्यों कहते—सो वाक्य शिवपुराण नारदीय स्कान्द काशी-खण्ड मत्स्यपु० भारत ब्रह्माण्ड आदिके बहुत इस ग्रन्थमें लिख दिये हैं और गङ्गा विष्णु विभूति है यह भागवत और गीता में लिखा है तो जिस विभूतिका वास जहां है वुह प्रलय तक उसी जगहस्थित है जैसे उच्चैः-श्रवा ऐरावत वज्र आदि स्वर्ग में यव अश्वत्थ आदि भूमि पर अनन्त आदि पाताल में तैसे गङ्गाका भी वासतिलोकी में होनेसे ३ लोक में स्थित है और बदरिकाश्रम से लेकर समुद्र तक जो गङ्गा तटके ही आश्रयसे तीर्थ है उनके माहात्म्यों में उनको नित्य और कलिपापनाशक कहा है तो फिर साफ गङ्गाका रहना साबित है और इस कलियुगके अन्त में कल्किभगवान् पृथ्वीके भारको दूर करके गङ्गातट पर तप करेंगे। यह कल्किपुराणके ३ अंश १९ अध्याय में स्पष्ट है फिर गङ्गायात्रा कहना महा अज्ञान है।

इति श्रीगङ्गातत्व० १ प्रकरण संक्षेपः ॥ १ ॥

अब और भी यात्रासूचक पुराणवाक्योंका विरोध दूर करते हैं तहां प्रथम—कलेर्अ० इसी श्लोकसे अन्तिम कलियुग स्पष्ट करते हैं इस श्लोक में विष्णुशब्दसे सर्वव्यापीका बोध है सो सिवाय प्रलयके पृथ्वीको नहीं छोड़ सक्ता है यह भागवत ५ स्कन्ध २० अध्या० ४०।४१ में गद्यसे स्पष्ट है और सहस्रान्त कलि में प्रलयका नियम होने से जो कलिकी संख्या न कही तो भी कुछ हानि नहीं है और अब ग्राम देवताओं की यात्रा में प्रत्यक्ष ही विरोध है क्योंकि वे ग्रामदेवी वालदेवी बुढ़ियामाई मसानी आदि नामोंसे प्रसिद्ध है भावानुसार फल भी देते हैं और हर एक छोटे बड़े यज्ञों में क्षेत्रपाल रूपसे पूजे जाते हैं इसीसे और कलियुग में यात्रा स्पष्ट खुलती है इसपर इस ग्रन्थमें बहुत लिखा है और ऐसे वाक्य ब्रह्मवैवर्त्त आदि पुराणोंमें भी है उनका भी आशय इसी श्लोक रीतिसे अन्तके कलिपर है किसी कलिकी वे भी संख्या नहीं कहते हैं इसपर इस ग्रन्थमें सिद्धान्त बहुत लिखा है संक्षेपतः देख लेवे और करामतराय भी मानी जाती है इस से स्थूल बुद्धियोंको गङ्गाके रहने में करामतराय दिखानेको और भी स्कन्दकेदारखण्ड भविष्य पुराण सामवेद श्रुति ऋग्वेद की श्रुति निरुक्त आदिके प्रमाण लिख दिये हैं इस ग्रन्थमें देखलो। इति द्वितीयं प्रकरणम् ॥ २ ॥

अब तिथिपत्र लिखित गङ्गायात्रा क्रमकारण कहते हैं। जैसे तिथिपत्रोंमें प्रथम ही धर्माधर्म विष्णु अवतार रूप ४ युगोंके लक्षण लिखेजाते हैं परन्तु विष्णु अवतार तो हर एक युगकी आवृत्तिमें हमेश होते है नहीं किन्तु कल्प में १ वखत कोई २ दो वखत होते हैं परन्तु युगके केवल लक्षण अभिप्राय से लिखे जाते हैं ऐसे ही अन्तिम कलि में ही गङ्गायात्रा नियम होनेसे कलि लक्षणमात्र ही गङ्गायात्रा लेख ५००० वर्षमात्र समझना चाहिये और अब जो प्रतिवर्षमें आयु घटाते हैं यह अन्ध परम्परा है क्योंकि जो इसी २८ में कलिमें गङ्गाजानेवाली होती तो और भी किसी वेदांग ज्योतिषके ग्रन्थ सूर्यसिद्धान्त आदि मकरन्द ग्रहलाघव आदि में जरूर ही लेख होता सो है नहीं इस पर इस ग्रन्थमें बहुत सिद्धान्त लिखा है तिसके अन्त में खूब जाहिर बात यह हैं जब औरङ्गजेबनामक यवनेशने हमारे धर्मपर प्रतिमाखण्डन आदि अत्याचारके समय श्रीगङ्गातट पर स्नानदान आदि धर्मको न

पकड़कर तिस समयमें प्रसिद्ध२ पण्डितोंको कैद कर लिया और बोला गंगा-स्नान छोड़ दो या गंगाका कुछ प्रताप दिखाओ यह सुनके कारागारस्थ पण्डितोंने एकान्तमें परस्पर सलाह करके ग्रन्थोंमेंसे कलिसंख्या न कहनेवाले यातासूचक प्रमाण दिखाके उक्त म्लेच्छका वंचन किया और उक्त अत्याचारी उग्रदण्डीके कहनेसे भयग्रस्त पण्डित तिथिपत्रों में गंगा आयु प्रतिवर्ष घटाने लगे और हिजरी सन तारीख मुहर्रम ईद आदि का भी लेख लिखने लगे इसका निश्चय उक्त यवनेश राज्यसे पूर्वके पत्रोंको देखकर कर लिया है और भी करलो—इति तृतीय ३ प्रकरणम् ।

अब चतुर्थ प्रकरण में गङ्गाजीके भूमिपर आनेका जो पुराणों के विरोध है वह दूर किया जाता है—तहां प्रथम परस्पर वाक्योंका विरोध कहते हैं—जैसे वाल्मीकरामायण बालकाण्ड और विष्णुपुराण श्रीभागवत नवमस्कन्ध आदि में भगीरथ राजा गङ्गाजीको लाये हैं यह प्रसिद्ध है सो भगीरथ रामचन्द्रका पूर्वज है और रामचन्द्रजी या काल में वैवस्वत मन्वन्तर के २४ में त्रेता में भये हैं या ते २४ में ही त्रेता में गङ्गाजी आई यह निश्चित है—या में दूसरा विरोध यह है कि इस सप्तम मन्वन्तरके सप्तम त्रेतामें बलि दैत्यके यज्ञमें वामनजीके चरणसे गङ्गाजी उत्पन्न हुई है। ऐसे ही तीसरा विरोध यह है कि प्रथम मन्वन्तर स्वायंभुव नाम है उस में भी भूमिपर गङ्गाजीका होना साबित है जो ब्रह्मपुत्र दक्षके साथ शिवजी से विरोध विध्वस्थान के जिस यज्ञ में हुआ है उसी यज्ञका अवभृथक संज्ञक स्नान यज्ञकर्त्ताओंने गङ्गा में किया है भागवत चतुर्थ-स्कन्ध में यह लिखा है और वह यज्ञ प्रथम मन्वन्तर में ही भया है और खास मनु स्मृति में गङ्गास्नान झूठाके वास्ते प्रायश्चित्तविधि में मनु-जीनेही लिखा है और भी प्रमाण संस्कृत में इस विषय के लिख दिये हैं तो अब अन्योन्य वाक्यों में विरोधसे गङ्गाके आगमन में महान् सन्देह है सो नहीं मानना चाहिये—क्योंकि जैसे श्रीविष्णु वाराह नृसिंह आदि रूपसे जम्बूद्वीपके ९ खण्डन में उपास्यरूपसे सृष्टिकी आदि ते ही स्थित है तथापि प्रभुने नारायण नृसिंह आदि अवतार भक्तरक्षा धर्म वृद्धि आदि विशेष कारण से फिर लिये हैं—ऐसे ही श्रीगङ्गाजी को भी

व्यवस्था समझनी—तिसका खुलासा तात्पर्य्य यह है—जबसे सृष्टि भई है और जब तक सृष्टि रहैगी तबसे ही गङ्गाजी है और तदन्त तक रहैगी भी—तथापि कालान्तर में किसी कारणसे माहात्म्य छिप जानेके सबबसे इस सप्तम वैवस्वत मन्वन्तर में वामन चरण द्वारा प्रकट होके माहात्म्य बढ़ाया—तिसके बाद कपिलदेवजी ब्राह्मणावतारके क्रोधाग्निसे भस्म भये सगरपुत्रोंके तारणार्थ वामन ब्राह्मणका चरणोदक चाहिये क्योंकि ब्राह्मणके शापसे मरा ब्राह्मणानुग्रहसे ही तरता है इस स्मृतिशास्त्र वाक्यसिद्धान्तको जतानेके लिये—भगीरथपर प्रसन्न होके भागीरथी दूसरी धारासे प्रकट होके देवप्रयाग में अपने नित्यरूप अलकनन्दा में मिलके सगरपुत्रोंको तार दिया। इस रीतिसे उक्त शास्त्रवाक्यों में कुछ विरोध नहीं है। इस विषय में प्रमाण संस्कृत में लिख दिये हैं—अतएव गङ्गाजीके आनेके विषय में और अब प्रलय तक रहने में कुछ सन्देह न करना चाहिये। यदि कोई सन्देह करै कि केदारखण्ड में लिखा है कि कलियुगके दूसरे चरण में वासुकीनागके लोक में जानेका गङ्गाजीने ही वासुकीको वर दिया है तो जरूर ही उस काल में गङ्गामाहात्म्य यहांसे जाता रहैगा। यह भी विचार ठीक नहीं है क्योंकि वासुकिको मूर्त्तिदर्शन देनेका वर दिया है इस विषयकी भी ब्रह्मपुराण आदिके प्रमाण संस्कृतमें इस ग्रन्थमध्य लिखे हैं। इति गङ्गातत्वसन्दर्भभाषासंक्षेपे चतुर्थप्रकरणम् ॥ ४ ॥

अब पञ्चम प्रकरण में श्रीगङ्गाजीके स्वरूपका निर्णय कहते हैं—अब कहीं २ शास्त्रों में श्रीगङ्गाजीको सगुण ब्रह्म ही द्रवित हो गंगारूप है यह लिखा है और उसी जलाकारकी शक्ति चतुर्भुजी मकरवाहना लिखी है सो ये दोनों किस कारणसे हुए। यदि कहो भक्त कल्याणार्थ हुए तो उस ब्रह्मके स्मरण नामोच्चारण आदिसे ही भक्तरक्षा हो सक्ती है। इस सन्देहको दूर करते हैं। यथा—जैसे निर्गुण ब्रह्म अपनीही इच्छासे सगुण भया तैसेही स्वेच्छासे निर्विकार जलाकार है। सो भक्त, उसे केवल संसार में अध्यात्म आदि तापोंसे तप्तोंके तापशान्त्यर्थ ही मानते हैं। सो स्कन्दपुराण में शिव पार्वतीसंवाद से स्पष्ट है और भी प्रमाण भारतके इस ग्रन्थ में लिखे हैं और भक्तेच्छासे भी ब्रह्मको जलाकार होना ब्रह्मवैवर्त्त प्रकृतिखण्ड के १०

अध्याय में स्पष्ट है। रासमण्डल में शिवजीके गानसे श्रीराधाकृष्ण जलरूप रूप हो गये यह देवीभागवत में भी लिखा है—ऐसेही कहीं २ यह भी लेख है श्रीनारदजीके गानसे भी जलरूप श्रीकृष्ण गोलोक में भये हैं वह कल्पभेदपर है। विरोध नहीं है अथवा एकही कल्प में दोनों बात घट सक्ती हैं जैसे प्रलय बिना भी इस मन्वन्तर में मार्कण्डेय मुनिको प्रभुने प्रलय दिखाय दी है तैसे यहां भी विरोध नहीं है। अब चतुर्भुजी मूर्त्ति होनेका कारण कहते हैं—जैसे कल्पाधिकारि देवताओंके १ मुख्यरूप और दूसरा रूप विशेष कार्य्यसाधक ईश्वर इच्छासे होते हैं यथा—सूर्य्य चन्द्रमा आकाश में नित्य मूर्त्तिसे भ्रमण करते हैं तथापि विशेष कार्य्यार्थ कश्यप अत्रिके यह में प्रकट होके सूर्य्यवंश, चन्द्रवंश चलाये हैं सो पुराणों में प्रसिद्ध है। तैसे यहां भी समझ लेना चाहिये इस विषय पर इस ग्रन्थ में बहुत प्रमाण द्वारा सिद्धान्त लिख दिया है विद्वान समझ लेंगे वा औरों को समझाय देंगे। इति पञ्चमप्रकरणम् ॥ ५ ॥

अब इस प्रकरणमें श्रीगङ्गाजीके प्रत्यक्ष प्रताप लक्षण कहते हैं, जो कि श्रीगङ्गाजल में मौजूद हैं।

१ प्रथम चिरकाल भी धरे गङ्गाजलमें कीड़ा नहीं पड़ते हैं १

यह और नीचे लिखे लक्षण अन्य नदी आदिके मिलाप स्थानसे भिन्न गङ्गाजलमें समझने चाहिये।

२ सीसीमें धरा गङ्गाजल और जलकी रीतिसे स्वतः घटता नहीं है।

३ चिरकाल धरा भी गङ्गाजल अन्य जलवत् स्वादुहीन नहीं होता है।

४ और जलवत् धरा हुआ गङ्गाजलमें दुर्गन्ध नहीं उठता है।

५ और धरे हुए जलमें रंग पलट जाना और कुछ मलिनता होजाती है सो गङ्गाजल में नहीं होती है।

६ चिरकाल धरे और जल में ऊपर मकरीका सा जाला पड़ जाता है सो गङ्गाजल में नहीं पड़ता है।

७ और धरेजलके ऊपर तेलकी सी बूंद पड़ जाती है, सो गङ्गाजल में नहीं पड़ती है।

८ अंधेरी रात्रि में मेघयुक्त आकाश होने पर भी दूरसे श्रीगङ्गाजी की धाराका दर्शन होता है।

९ पर्वके दिन और भी कभी २ बीच धारा में सपेद दूधकी सी धारा न्यारी मालूम होती है, परन्तु परलोकगामोओंको नहीं दिखती हैं किन्तु गङ्गास्नानके बाद उनको भी उस धाराका दर्शन होता है।

१० अन्य जलवत् श्रीगङ्गाजल में वात आदि दोष नहीं है और जो किसीर को बादीसा मालूम पड़ता है। सो रोगोंको उखारके बाहर निकालता है। यदि सेवन ही किये चला जाय तो मनुष्यको शुद्ध निरोग कर देता है।

११ औषधिके अनुपानके अभाव में गङ्गाजलसे औषधि दी जाती है। तब गङ्गा जलही उक्त अनुपानका गुण दे देता है।

१२ यदि कोई सर्वदा गङ्गाजलसे ही स्नान भोजन पानका नियम करे तो जीवन पर्य्यन्त रोग देह में नहीं होता है।

१३ भागीरथके आश्रम में जल मोतीके सदृश ही रहता है नीला कभी नहीं पड़ता।

१४ श्रीगङ्गाजी में सिवार नहीं होती है।

१५ तथा घोंघाजीव भी नहीं होते हैं।

१६ गङ्गाजलके स्नान करनेके बाद पसीना आने पर पसीना में बास नहीं होती हैं परन्तु विधिसे स्नान करे।

१७ गंगोत्तरीके जलकू तौलके उसमें गरम करके मोहर छोड़नेसे भी जलका वजन नहीं घटता है।

१८ जांगल (जैपुर) आदि देशोंमें गङ्गायज्ञमें सोसोसे गंगाजल उमगता है।

१९ गंगाजल पीनेसे प्यासके साथ क्षुधा भी निवृत्त थोड़ी देर होजाती है और जलसे नहीं होती किन्तु क्षुधा और लगती है।

२० गंगाजल पानसे शान्तवृत्ति सत्वगुणकी प्रकटता कोमल हृदय क्षण-मात्र होजाता है यदि विधिसे सेवेंगे तो उक्त गुण हमेशा रहेंगे।

२१ गंगाजलके आचमनसे ही उस समय स्वत: हरिस्मरण होजाता है।

२२ किनारेपर बैठके गङ्गासूक्तके पाठकरनेसे स्वत: गंगाजल उछलता है।

२३ विधिसे गंगास्नान करनेसे चातुर्थक ज्वर आता रहता है।

२४ विधिसे हमेस गंगाजल पीनेसे मुखगन्धरोग जाता रहता है।